टिळक महाराष्ट्र विद्यापीठ, पुणें
भारतीय धर्म तत्त्वज्ञान संस्कृति मण्डळ – प्रकाशनं ४

( टिळक विद्यास्थान – १ )

# ब्रह्मसूत्रवृत्तिः

( पदसूचीसहिता )

लेखक
लो. बाळ गंगाधर टिळक

१ ऑगस्ट १९५७

मूल्य तीन रुपये

# प्रास्ताविकं किञ्चित्

**“ यस्य ब्रह्मणि रमते चित्तम् । नन्दति नन्दति नन्दत्येव ॥ ”**

— मोहमुद्गरः १९

अनुपमं किल आनन्दमनुभवामः लोकमान्यानां ‘मण्डाले’ इति स्वनामाविश्रुतकारागृहोपनिबद्धाम् अद्याप्यप्रकाशितां ब्रह्मसूत्रवृत्तिं प्रियवाचकमहानुभावेभ्यः उपहारीकर्तुम् । इयं वृत्तिः तैः तत्र द्वयोः टिप्पणीपुस्तकयोः आहत्य २१७ पृष्ठेषु गीर्वाणभाषायां व्यलेखि । अस्याश्च प्रथमं पुस्तकं तत्पुत्रेभ्यः श्रीमद्भ्यः रामभाऊमहोदयेभ्यः, अन्यच्च तत्पौत्रेभ्यः श्रीमद्भ्यः जयन्तरायेभ्यः समधिगतमस्माभिः ।

इयं खलु सूत्रवृत्तिः प्रायः शाङ्करं भाष्यमेव संक्षिप्य निरमायि लोकमान्यैः । आपाततोऽप्यवलोकने एवं दृष्टिपथमायाति, यदिदं लेखनं स्वाध्ययनार्थमेव तैरकारि । अतः स्वाध्ययनार्थमेव निर्मितत्वात् अस्याः वृत्तेः, एकोनविंशतिसूत्राणि तैः नैव व्याख्यातानि । संभाव्यते यत् किल स्वीययशसा प्रद्योतमानस्य गीतारहस्यापरनामधेयस्य कर्मयोगशास्त्रस्य निर्मित्यर्थं नियतपूर्वभावित्वेन आवश्यकं वेदान्तशास्त्राध्ययनं लोकमान्यैः सूत्रवृत्तिलेखनद्वारा संपादितम् । अतः यद्यपि बहुतरं मौलिकं किमपि वेदान्तशास्त्रदृष्ट्या नावलोक्यते अस्यां वृत्तौ, तथापि तेषां तौलनिकाभ्यासपरिपाटी सूक्ष्मावलोकनशक्तिश्च बाढमवगम्यते ।

अस्यां सूत्रवृत्तौ षट्चत्वारिंशत्स्थलेषु सूत्रार्थविषये श्रीरामानुजाचार्यमतम् आङ्ग्लभाषायां प्रदर्श्य क्वचित् स्वाभिप्रायोऽपि तैः आविष्कृतः इत्यवलोक्यते । तथा हि — द्वितीयाध्यायस्य तृतीयपादे ‘ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ’ इति सप्तदशसूत्रव्याख्यानावसरे असंदिग्धं प्रत्यपादि लोकमान्यैः यत् ‘ जीवः यद्यपि नोत्पद्यते तथापि ब्रह्मणा सह ऐक्यं न भजते,

किन्तु ब्रह्मप्रकारो जीवः प्रकारि च ब्रह्म ' इत्येतादृशः श्रीरामानुजैः कृतः एतत्सूत्रार्थः न सूत्रकाराभिप्रेतः, न च स्वरसः स्वाभाविको वा इति तृतीयाध्यायस्य द्वितीयपादे द्वाविंशतितमे सूत्रे शाङ्करमतम् अनुसृत्य अर्थं विलिख्य स्पष्टातिस्पष्टमेवं ते प्रत्यपादिषुः यत् 'श्रीरामानुजैः कृतः अर्थः सर्वथा अन्त्राभाविकः, तादृगर्थकरणे च अयमेव केवलो हेतुः यत् तैः निर्विशेषं ब्रह्म नाङ्गीक्रियते ' इति। तथा च 'भोक्त्रापत्तेरविभागश्चे-त्स्याल्लोकवत्' ( २.१.१३ ) इत्यस्मिन् सूत्रे, 'लोकवत्, इति दृष्टान्तः श्रीरामानुजमतानुसारं नृपतत्सेवकपरत्वेन अङ्गीकृतोऽपि विशिष्टाद्वैततत्त्वं न कथमपि उपकुरुते ', इत्यसंदिग्धं वचो लोकमान्यानाम्। एवं बहुषु स्थलेषु श्रीरामानुजमतं परीक्षितं प्रत्युक्तं च तैः। तथापि 'इतरस्याप्येवमसंश्लेषः पाते तु ' ( ४.१.१४ ) इत्यस्मिन् सूत्रे 'पाते तु ' इत्यस्य श्रीरामानुजैः कृतः 'शरीरपातादूर्ध्वं सुकृतानि नश्यन्ति ' इत्ययम् अर्थः समीचीनतरः इत्यपि लोकमान्यैः निरभिनिवेशं संसूचितम्।

तथा च यद्यपि प्रायः श्रीशङ्कराचार्याणां मतमेव अनुमतं लोकमान्यैः, तद्विषया च लोकमान्यानाम् आदरभावना 'आचार्याणाम्' इति तेषां बहुमाननिदर्शकसमुल्लेखनेन अवगम्यते, तथापि तैः साकमपि स्वीयं मतान्तरं लोकमान्यैः प्रादर्शि एव। तथा हि – 'सूक्ष्मं तु तदर्हत्वात्।', ( १.४.२ ) इति सूत्रे 'सूक्ष्मशब्दस्य श्रीशङ्कराचार्यैः कृतात् स्थूल-शरीररूपार्थात् वरं सूक्ष्मशरीररूपोऽर्थः ' इति निःसन्देहं प्रतिपादितम् एवमेव 'अंशो नानाव्यपदेशात् ... ' ( २.३.४३ ) इति सूत्रे नानाव्यपदे-शात् इत्यस्य भेदव्यपदेशात् इति शाङ्करम् अर्थं वृत्तौ लिखित्वा टिप्पण्याम् एवं संसूचितं यत् 'अयं नानात्वव्यपदेशः साङ्ख्यशास्त्रोक्ता-नेकात्मवादविषयकोऽपि भवितुमर्हति। तत्र च एनं साङ्ख्यानामनेकात्मवादं बादरायणः अस्मिन् सूत्रे एवं परिहरति – भवन्तु अनेके आत्मानः, परं न तथा तत्त्वतः, किन्तु एकस्यैव आत्मनः सर्वे आत्मानः अंशरूपः

भवितुमर्हन्ति ' इति। अयमप्यपरो लोकमान्यानां विशेषो मनसि पदमादधाति यत् अत्र मतान्तरप्रदर्शनस्थले एव श्रीशङ्कराचार्यैः कृतः 'अंशः' इत्यस्य 'अंश इव अंशः' इत्यर्थः अतीव युक्तः इति तैः अनुमोदितः। केवलं युक्तायुक्तविचारणायां प्रवृत्तानां कथंकारं निरभिनिवेशा वृत्तिरित्यस्य द्योतकमिदं निदर्शनं 'स्वार्थेषु को मत्सरः' इति वाचस्पतिमिश्रोक्तिं स्मृतिपथमानयति। एवं बहूनि स्थलानि प्रदर्शयितुं शक्यन्ते। परम् अत्र स्थालीपुलाकन्यायेन कानिचित् प्रदर्शितानि। तथा च यत् लोकमान्याः श्रीरामानुजानां अर्थलापने दोषं संविभाव्य शाङ्करं अर्थं अनुमोदितवन्तः तत् युक्तिमत् न वा, ब्रह्मसूत्राणां च किमद्वैते तात्पर्यं आहोस्वित् विशिष्टाद्वैतादिषु इत्यादि विवेचयितुं नायमवसरः। केवलं लोकमान्यानां अमुद्रितं लेखनं प्राकाश्यं यातु इत्ययमेव एतत्सूत्रवृत्ति-प्रकाशनोद्देशः इत्यवश्यं विदांकुर्वन्तु विद्वांसः।

ग्रन्थान्ते ब्रह्मसूत्राणां पदसूची यद्यपि स्वातन्त्र्येण निर्माय अनुबद्धा तथापि डॉ. बेलवलकरमहानुभावकृतपदसूची अतीव उपकारिणी समजनिष्ट, इत्यवश्यं निर्देशमर्हति। अनयोः सूच्योः भेदः अवगम्येत एव जिज्ञासुभिः। सा च अतीव उपयुक्ता भवेत् जिज्ञासमानानाम्। तथा च अस्मिन् ग्रन्थे विद्यमानानां सर्वेषां उद्धरणानां स्थलनिर्देशः यावच्छक्यं अस्माभिः कृतः।

इयं वृत्तिः वेदान्तशास्त्रं सूत्रद्वारा पिपठिषूणां विद्यापीठीयविद्यार्थिनां तथा च प्राचीनपद्धत्या अधिजिगांसमानानां छात्राणां अतीव उपकारिणी भवेत् इत्यत्र नास्ति शङ्कायाः अवसरः। यथा किल सुगृहीतनामधेयानां अपरोक्षसाक्षात्कारवतां सदाशिवब्रह्मेन्द्राणां ब्रह्मसूत्रवृत्तिः शाङ्करं भाष्यं स्मृतिपथं आनेतुं अतीव उपकुरुते तथैवेयं वृत्तिः। तथापि उपरि-निर्देशानुसारं श्रीरामानुजमतसमुल्लेखनेन, क्वचित् स्वाभिप्रायाविष्करणेन, प्रत्यध्यायं च उपस्थितिसौकर्यापादकस्वनिर्मितश्लोकद्वारा कृतेन सर्वेषां

अधिकरणानां विषयप्रदर्शनेन, अतीतेभ्यः ब्रह्मसूत्रवृत्तिग्रन्थेभ्यः सर्वेभ्यः वैशिष्ट्यमवगाहते इयं वृत्तिरित्युक्तिर्नैव अत्युक्तिः भवेत् ।

अतीव समुचितमेवैतद् यत् इयं वृत्तिः लोकमान्यानां शिक्षाविषयक-स्मारकभूतस्य तिलकमहाराष्ट्रविद्यापीठस्य भारतीयधर्मतत्त्वज्ञानसंस्कृति-मण्डलशाखायाः तिलकविद्यास्थानद्वारा अद्य प्राकाश्यं एति इति । अस्याः मुद्रणं विनैव मूल्यं 'केसरि'मुद्रणालये श्रीमद्भिः जयन्तरायप्रभृतिभिः विश्वस्तैः कृतं इति अवश्यं ते धन्यवादान् अर्हन्ति । तथा च अस्मिन् संपादनकर्मणि यैः यैः विद्वद्भिः सुहृद्भिः सहकारिभिः च नैकप्रकारेण साहाय्यमाचरितं ते सर्वेऽपि नितान्तं धन्यवादार्हाः ।

लोकमान्यकृतां वृत्तिमिमां ब्रह्मसूत्राणां अधिगच्छन्तु विद्यार्थिनः मुमुक्षवश्च, अवगच्छन्तु च 'अग्र्यां सूक्ष्मां बुद्धिं' अस्मत्पूर्वाचार्याणां, अनुभवन्तु च संसारार्णवनिमग्नजनोद्धरणक्षमं अतीव प्राचीनं भारतीयं तत्त्वज्ञानं, सफलीभवन्तु च तेन अस्मत्परिश्रमाः इत्येवं जगदुत्पत्तिस्थिति-संहारहेतुं गुहाहितमपि 'जनतात्मानं' भगवन्तं 'श्रीशं' प्रार्थ्य विरम्यते ।

**वि. प्र. लिमये**

२३ जुलै १९५७ भा. ध. त. सं. मण्डलसंचालकः

# अनुक्रमणिका



# संक्षेपचिह्नानां विवरणम्

| | |
|---|---|
| ई | ईशोपनिषत् |
| ऋ | ऋग्वेदः |
| ऐ | ऐतरेयोपनिषत् |
| ऐआ | ऐतरेय-आरण्यकम् |
| ऐब्रा | ऐतरेय-ब्राह्मणम् |
| क | कठोपनिषत् |
| कौ | कौषीतक्युपनिषत् |
| गी | (भगवद्-)गीता |
| छां | छांदोग्योपनिषत् |
| जाबाल | जाबालोपनिषत् |
| जैसू | जैमिनिसूत्राणि ( The same as पूर्वमीमांसासूत्राणि ) |
| तांब्रा | तांड्य-ब्राह्मणम् |

| | |
|---|---|
| तै | तैत्तिरीयोपनिषत् |
| तैआ | तैत्तिरीय-आरण्यकम् |
| तैसं | तैत्तिरीय-संहिता |
| पा | पाणिनीया ( अष्टाध्यायी ) |
| पूमीसू | पूर्व-मीमांसा-सूत्राणि |
| प्र | प्रश्नोपनिषत् |
| बृ | बृहदारण्यकोपनिषत् |
| ब्रसू | ब्रह्म-सूत्राणि |
| मनु | मनु ( स्मृति ) |
| मभा | महा-भारत |
| मुं | मुंडकोपनिषत् |
| मैसं | मैत्रायणी-संहिता |
| शब्रा | शतपथ-ब्राह्मणम् |
| शांभा | शांकरभाष्यम् |
| श्वे | श्वेताश्वतरोपनिषत् |
| साब्रा | सामविधान-ब्राह्मणम् |
| सांका | सांख्य-कारिका |
| BORI | Bhandarkar Oriental Research Institute |
| CE | Critical Edition ( of the Mahābhārata ) |
| R | Rāmānujāc'ārya |
| Vṛttikāra | Unknown; ( introduced by S'aṅkara as 'अत्र केचिदाहुः' in his भाष्य on ब्रसू I. i. 23. ) |





( मंडाले तुरुंगांतून सुटून आल्यावरचें छायाचित्र – १९१४ )

**बालो गाङ्गाधरिश्चायं तिलकान्वयजो मतः ।**
**वेदान्तं कर्मयोगं च यो विव्यासाग्र्यया धिया ॥**

# ॥ ब्रह्मसूत्राणि ॥

[ श्रुतिवाक्योपेतानि अल्पाक्षरवृत्तिसहितानि च ]



## ॥ अथ समन्वयाख्यप्रथमाध्यायस्य प्रथमपादः ॥

( १ ) जिज्ञासाधिकरणम् । सू. १

**१. अथातो ब्रह्मजिज्ञासा ॥**

( २ ) जन्माद्यधिकरणम् । सू. २

**२. जन्माद्यस्य यतः ॥**

" यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशान्ति " इत्यादि ( तै ३.१ )

( ३ ) शास्त्रयोनित्वाधिकरणम् । सू. ३

**३. शास्त्रयोनित्वात् ॥**

( अर्थद्वयम् )

( ४ ) समन्वयाधिकरणम् । सू. ४

**४. तत् तु समन्वयात् ॥**

( ५ ) ईक्षत्यधिकरणम । सू. ५–११

**५. ईक्षतेर्नाशब्दम् ।**

" सदेव सोम्येदमग्र आसी "दित्युपक्रम्य ( छां ६.२.१ ) " तदैक्षत बहु स्यां प्रजायेये "ति ( छां ६.२ ३ )

**६. गौणश्चेन्नात्मशब्दात् ।**

तथा तदनन्तरं तेजोबन्नानां सृष्टिमुक्त्वा " हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इति श्रूयते ( छां ६.३.२ )

**७. तन्निष्ठस्य मोक्षोपदेशात् ।**

अनन्तरं " तत् त्वमासि " इति ( छां ६.८.७ ) चेतनस्य श्वेतकेतोः " ... यावन्न विमोक्ष्ये ... " इति ( छां ६.१४.२ ) मोक्षोपदेशः ।

**८. हेयत्वावचनाच्च ।**

**९. स्वाप्ययात् ।**

" स्वमपीतो भवति " ( छां ६.८.१ ); " यत्रैतत् पुरुषः स्वपिति नाम " ( छां ६ ८.१ ) इत्यनेन पुरुषस्य परमात्मनि अप्ययः उक्तः ।

**१०. गतिसामान्यात् ।**

**११. श्रुतत्वाच्च ॥**

e. g. " स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता ... । " ( श्वे ६.९ )

( ६ ) आनन्दमयाधिकरणम् । सू. १२–१९

**१२. आनन्दमयोऽभ्यासात् ।**

तैत्तिरीयके ( २.१–५ ) " अन्नरसमयं, प्राणमयं, मनोमयं, विज्ञानमयम् " इत्यनुक्रम्य " विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः "

R. considers this Adh. to be – with the last – a part of the fundamental proposition included in चतुःसूत्री ( ब्रसू 1.1.1–4 ).

**१३. विकारशब्दान्नेति चेन्न प्राचुर्यात् ।**

प्राचुर्यार्थे मयट् ( पा ५.४.२१ ‘ तत्प्रकृतवचने मयट्. ’ )

**१४. तद्धेतुव्यपदेशाच्च ।**

“ एष ह्येवानन्दयाति ” ( तै २.७ )

**१५. मान्त्रवर्णिकमेव च गीयते ।**

“ सत्य ज्ञानमनन्तं ब्रह्म ” इति ( तै २.१ ) मन्त्रे यत् प्रकृतं तदेव “ अन्योऽन्तर आत्माऽऽनन्दमय ” इत्यनेन ( तै २.५ ) गीयते ।

**१६. नेतरोऽनुपपत्तेः ।**

**१७. भेदव्यपदेशाच्च ।**

“ रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति ” इत्यादिना ( तै २.७ ) जीवानन्दमयौ भेदेन व्यपदिशति ।

**१८. कामाच्च नानुमानापेक्षा ।**

“ सोऽकामयत । बहु स्यां प्रजायेयेति ” ( तै २.६ )

**१९. अस्मिन्नस्य च तद्योगं शास्ति ॥**

“ यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ” ( तै २.७ )

( ७ ) अन्तराधिकरणम् । सू. २०–२१

**२०. अन्तस्तद्धर्मोपदेशात् ।**

“ अथ य एषोऽन्तरादित्ये हिरण्मयः ... हिरण्यश्मश्रुः ... ” इत्यादि ( छां १.६.६ ); “ अथ य एषोऽन्तराक्षिणि पुरुषः ... ” ( छां १.७.५ ); तद्धर्मो यथा – “ ... प्रतिष्ठितः ... स्वे महिम्नि ... ” ( छां ७.२४.१ )

**२१. भेदव्यपदेशाच्चान्यः ॥**

“ य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद ” ( बृ ३.७.९) इति श्रुत्यन्तरे भेदकथनात् । आदित्यादन्य एव पुरुषोऽत्र गृह्यते ।

( ८ ) आकाशाधिकरणम् । सू. २२

**२२. आकाशस्तल्लिङ्गात् ॥**

" अस्य लोकस्य का गतिरित्याकाश इति होवाच। सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते ...। " ( छां १.९.१ )

( ९ ) प्राणाधिकरणम्। सू. २३

**२३. अत एव प्राणः ॥**

" कतमा सा देवतेति " ( छां १.११.४ ) " प्राण इति होवाच। सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति। " ( छां १.११.५ ). The **Vrittikāra** here takes this sūtra to refer to " प्राणस्य प्राणम् " ( बृ ४.४.१८ ) or to " प्राणबन्धनँ हि सोम्य मनः " ( छां ६.८.२ ). But Shankara rejects it rightly; for the reason " अतः एव " denotes similarity.

( १० ) ज्योतिश्चरणाधिकरणम्। सू. २४–२७

**२४. ज्योतिश्चरणाभिधानात्।**

" यदतः परो दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु ... उत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः। " ( छां ३.१३.७ ). पूर्वस्मिन् वाक्ये ( छां ३.१२.६ ) " तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि " इति चरणाभिधानात्।

**२५. छन्दोभिधानान्नेति चेन्न, तथा चेतोर्पणनिगदात्, तथा हि दर्शनम्।**

" गायत्री वा इदँ सर्वम् ... " इत्युपक्रम्य ( छां ३.१२.१ ) " सैषा चतुष्पदा षड्विधा गायत्री। तदेतदृचाभ्यनूक्तम् – तावानस्य महिमे "त्युक्तत्वात् ( छां ३.१२.४–५ )। तस्मिंश्च " गायत्री वा इदँ सर्वम् " इत्यनेन चित्तसमाधानं निगद्यते। cf. तथाहि दर्शनम् – " सर्वं खल्विदं ब्रह्म " ( छां ३.१४.१ ) इति।

**२६. भूतादिपादव्यपदेशोपपत्तेश्चैवम्।**

भूतपृथिवीशरीरहृदयानि हि निर्दिश्याह –

" सैषा चतुष्पदा षड्विधा गायत्री " इति ( छां ३.१२.५ )

**२७. उपदेशभेदान्नेति चेन्न, उभयस्मिन्नप्यविरोधात् ॥**

" त्रिपादस्यामृतं दिवि " ( छां ३.१२.६ ) इति सप्तमी; तथा " यदतः परो दिवः " ( छां ३.१३.७ ) इति 'दिवः' पञ्चमी विभक्तिः। तथापि न भेदः। उभयस्मिन्नपि पञ्चम्यन्ते वा सप्तम्यन्ते वाऽविरोधात्।

( ११ ) प्रतर्दनाधिकरणम्। सू. २८–३१

**२८. प्राणस्तथानुगमात् ॥**

प्रतर्दनेन्द्रयोः संवादः कौषीतक्यां ( कौ ३.२ ) " स ( इन्द्रः ) होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व " इति। अत्र प्राणः परमात्मा, न इन्द्रः। तथा चानुगम्यते " स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः " इति ( कौ ३.९ )

**२९. न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥**

यद्यपि " मामेव विजानीहि " इत्युपक्रम्य " न वाचं विजिज्ञासीत वक्तारं विद्यात् " ( कौ ३.८ ) इति वक्तुरेवोपदेशस्तथापि अस्मिन् प्रकरणे भूमाऽध्यात्मसंबन्धः, यथा " स एषः ... आनन्दोऽजरोऽमृतः " इत्यादि ( कौ ३.९ ); " प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति " इत्यादि ( कौ ३.३ )

**३०. शास्त्रदृष्ट्या तूपदेशो वामदेववत् ।**

" तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे 'अहं मनुरभवं सूर्यश्चेति' " ( ऋ ४.२६.१; बृ १.४.१० )

N. B. – Shankara here discusses the ethical import of the story of इन्द्र not affected by his acts; cf. 'तस्य मे तत्र लोम च न मीयते' ( कौ ३.१ )

**३१. जीवमुख्यप्राणलिङ्गान्नेति चेन्न, उपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥**

जीवमुख्यप्राणलिङ्गं यथा " वक्तारं विद्यात् " ( कौ ३.८ ), " प्राण एव प्रज्ञात्मा इदं ( v.l. इमं ) शरीरं परिगृह्योत्थापयाति " ( कौ ३.३ ). 'आश्रितत्वा'दित्यस्य पूर्वसूत्रे ( १.१.२३ 'अत एव प्राणः' ) आश्रितत्वादित्येवार्थो युक्तः । Shankara quotes approvingly the वृत्तिकार's explanation.

॥ इति प्रथमाध्यायस्य प्रथमपादः ॥

## ॥ अथ प्रथमाध्यायस्य द्वितीयपादः ॥

(१) सर्वत्र प्रसिद्ध्यधिकरणम्। सू. १–८

**१. सर्वत्र प्रसिद्धोपदेशात्।**

"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषः। यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति। स क्रतुं कुर्वीत॥ मनोमयः प्राणशरीरः ..." (छां ३.१४.१–२). अत्र मनोमयः शारीरः अथवा परमात्मा – इति प्रश्नः। उत्तरम् – सर्वेषु वेदान्तेषु परमात्मेति प्रसिद्धत्वात् परमात्मैव गृह्यते, न मनोमयत्वेन शारीर इति।

**२. विवक्षितगुणोपपत्तेश्च।**

**३. अनुपपत्तेस्तु न शारीरः।**

**४. कर्मकर्तृव्यपदेशात्।**

"एतमितः प्रेत्याभिसंभवितास्मि" (छां. ३.१४.४); 'एतं' is karma and must be different from the nominative of अभिसंभवितास्मि.

**५. शब्दविशेषात्।**

"यथा व्रीहिर्वा यवो वा ... एवमयमन्तरात्मन् पुरुषो हिरण्मयः।" (शब्रा १०.६.३.२). This shows that अन्तर् आत्मन् (i.e. आत्मनि; Vedic locative) पुरुषः भिन्नत्वेन वर्तते।

**६. स्मृतेश्च।**

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" (गी १८.६१)

**७. अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्च।**

अर्भक = small; ओकस् = abode; e.g. "अणीयान् व्रीहेर्वा यवाद्वा" (छां ३.१४.३). So described because of उपासना. निचाय्यः = द्रष्टव्यः उपदिश्यते.

**८. संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥**

N. B. – The reasons व्योमवच्च & वैशेष्यात् are important as giving a differentia of जीवात्मा and परमात्मा.

( २ ) अत्त्रधिकरणम् । सू. ९–१०

**९. अत्ता चराचरग्रहणात् ।**

" यस्य ब्रह्म च क्षत्र च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ " ( क २.२५ ). Here the word चराचर does not occur in the श्रुति, but is said to be implied in ब्रह्म & क्षत्र (i. e. ओदन) and in मृत्यु (i. e. उपसेचन. ) Can this refer to बृ 1.2.5 " सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति " ?

**१०. प्रकरणाच्च ॥**

( ३ ) गुहाप्रविष्टाधिकरणम् । सू. ११–१२

**११. गुहां प्रविष्टावात्मानौ तद्दर्शनात् ।**

" ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति etc." ( क ३.१ ) Here these two are not बुद्धि and क्षेत्रज्ञ, but जीव & परमात्मा.

**१२. विशेषणाच्च ॥**

" आत्मान रथिनं विद्धि शरीरं रथमेव तु "। ( क ३.३ )

( ४ ) अन्तराधिकरणम् । सू. १३–१७

**१३. अन्तर उपपत्तेः ।**

" य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति " ( छां ४.१५.१ )

**१४. स्थानादिव्यपदेशाच्च ।**

Shankara observes : "सर्वगतस्यापि ब्रह्मणः ... ... स्थानविशेषो न विरुध्यते शालग्राम इव विष्णोः"; cf. बृ ३ ७.३ "यः पृथिव्यां तिष्ठन् ..."

**१५. सुखविशिष्टाभिधानादेव च।**

"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति ( छां ४.१०.५ )

**१६. श्रुतोपनिषत्कगत्यभिधानाच्च।**

"तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथः" इत्यादि ( छां ४.१५.५ )

**१७. अनवस्थितेरसंभवाच्च नेतरः।**

( ५ ) अन्तर्याम्यधिकरणम्। सू. १८—२०

**१८. अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्।**

"... य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति" ( बृ. ३ ७ १ ) इत्युपक्रम्य "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद ... यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्यामी अमृतः ( बृ ३.७ ३ ). Here अन्तर्यामी is परमात्मा, not प्रधान.

**१९. न च स्मार्तमतद्धर्माभिलापात्।**

स्मार्त = प्रधान of the सांख्यs.

**२०. शारीरश्च उभयेऽपि हि भेदेनैनमधीयते॥**

उभये = काण्वाः, माध्यन्दिनाश्च; यथा "यो विज्ञाने तिष्ठन् ..." इति काण्वाः ( बृ ३.७.२२ ); "य आत्मनि तिष्ठन् ..." इति माध्यन्दिनाः ( बृ ३.७ ३० )।

( ६ ) अदृश्यत्वाधिकरणम्। सू. २१—२३

**२१. अदृश्यत्वादिगुणको धर्मोक्तेः।**

"अथ परा यया तदक्षरमधिगम्यते" ( मुं १.१.५ ); "यत्तदद्रे-

श्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः॥" ( मुं १.१.६ )

**२२. विशेषणभेदव्यपदेशाभ्यां च नेतरौ।**

Not इतरौ i.e. प्रधान and जीव. विशेषण is given in the passages that follow. e.g. "अक्षरात् परतः परः" ( मुं २.१.२ ). Shankara admits that प्रधान may be taken as subordinate but not principal category.

**२३. रूपोपन्यासाच्च॥**

रूपं यथा – "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे etc." ( मुं २.१.४ )।

( ७ ) वैश्वानराधिकरणम। सू. २४–३२

**२४. वैश्वानरः साधारणशब्दविशेषात्।**

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमात्ति। तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा etc." ( छां ५.१८.१–२ ). The साधारणशब्द ( अग्नि fire ) is here qualified ( विशिष्ट ) by stating that heaven is his head, etc. साधारणशब्दस्य विशेष इति विग्रहः।

**२५. स्मर्यमाणमनुमानं स्यादिति।**

"यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः।"

( मभा १२.४७.६८; CE 12.47.44)

**२६. शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न, तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते।**

"पुरुषेऽन्तः प्रतिष्ठितं वेद" इति ( शब्रा १०.६.१.११ ) अन्तःप्रतिष्ठानमुक्तम्। शब्दश्च वैश्वानरः आभिमुख्येनाग्निं द्योतयति। अतो

जाठराग्निरत्राभिप्रेत इति चेन्न। तथादृष्ट्या = जाठरदृष्ट्या परमेश्वर एव द्रष्टव्यः।

**२७. अत एव न देवता भूतं च।**

**२८. साक्षादप्यविरोधं जैमिनिः।**

न तथादृष्ट्या ग्रहणमावश्यकम्। साक्षात् परमेश्वरे गृहीतेऽप्यविरोधः।

**२९. अभिव्यक्तेरित्याश्मरथ्यः।**

प्रादेशमात्रत्वमभिव्यक्तिः।

**३०. अनुस्मृतेर्बादरिः।**

प्रादेशमानं मनसाऽनुस्मर्यते। अत एव युक्तम्।

**३१. संपत्तेरिति जैमिनिस्तथा हि दर्शयति।**

प्रादेशमात्र is from मूर्धन् to चुबुक of one's head, as described in शब्रा १०.६.१.१०–११.

**३२. आमनन्ति चैनमस्मिन्॥**

Cf जाबाल २ :– "कतमं चास्य स्थानं भवतीति। भ्रुवोर्घ्राणस्य च यः सन्धिः" इत्यादि।

**॥ इति प्रथमाध्यायस्य द्वितीयपादः॥**

# ॥ अथ प्रथमाध्यायस्य तृतीयपादः ॥

( १ ) द्युभ्वाद्यधिकरणम् । सू. १–७

**१. द्युभ्वाद्यायतनं स्वशब्दात् ।**

" यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतु "रिति ॥ ( मुं २.२.५ ) स्वशब्द = आत्मशब्द.

**२ मुक्तोपसृप्यव्यपदेशात् ।**

" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ " ( मुं २.२.९ )

**३. नानुमानमतच्छब्दात् ।**

**४. प्राणभृच्च ।**

**५. भेदव्यपदेशात् ।**

" तमेवैकं जानथ आत्मान " मित्यादिना ( मुं २.२.५ ) भेदव्यपदेशः ।

**६. प्रकरणात् ।**

प्रकरणं चेदं परमात्मनः " कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति " ( मुं १.१.३ ).

**७. स्थित्यदनाभ्यां च ॥**

" द्वा सुपर्णा सयुजा सखाया " इत्यादिना ( मुं ३.१.१ ).

( २ ) भूमाधिकरणम् । सू. ८–९

**८. भूमा संप्रसादादध्युपदेशात् ।**

" भूमा त्वेव विजिज्ञासितव्यः ... " ( छां ७.२३.१ ); " यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा " इत्यादि ( छां ७.२४.१ ); संप्रसादः = सुषुप्तिस्थानम् । सम्यक् प्रसीदत्यस्मिन्निति निरुक्त्या । तस्मिन् प्राणो जागर्ति । अतः प्राणोऽत्र संप्रसादः । " प्राण एव भूमा स्यात् " इत्यत ऊर्ध्वं भूम्नो व्यपदेशात् ।

**९. धर्मोपपत्तेश्च ॥**

' यत्र नान्यत् पश्यति ' इत्यादिना ( छां ७.२४.१ )

( ३ ) अक्षराधिकरणम् । सू. १०–१२

**१०. अक्षरमम्बरान्तधृतेः ।**

" कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति " ( बृ ३.८.७ ); " स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु " इत्यादि ( बृ ३.८.८ )

**११. सा च प्रशासनात् ।**

" एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ... " ( बृ ३.८.९ ) इति प्रशासनादम्बरान्तधृतिरिति पूर्वेणान्वयः ।

**१२. अन्यभावव्यावृत्तेश्च ॥**

" नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ " इत्यादि ( बृ ३.८.११ )

( ४ ) ईक्षतिकर्मव्यपदेशाधिकरणम् । सू. १३

**१३. ईक्षतिकर्मव्यपदेशात् सः ॥**

प्रश्नोपनिषदि " एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः " ( प्र ५.२ ) इत्युपक्रम्य वाक्यशेषे व्यपदेशो भवति " स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते " ( प्र ५.५ ) इति। जीवानां हि सर्वेषां ब्रह्मणि संघातोपपत्तेर्भवति ब्रह्मलोको जीवघनः। तस्मात् परः पुरुषः।

R. considers that the two alternatives here are not ब्रह्म & जीव, but ब्रह्म and ब्रह्मा चतुर्मुखः।

( ५ ) दहराधिकरणम् । सू. १४–१८

**१४. दहर उत्तरेभ्यः ।**

" अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम् " ( छां ८.१.१ ) इति। उत्तर = उत्तरग्रन्थ.

**१५. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च।**

" इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति " इत्यादि ( छां ८.३.२ ); ब्रह्मलोकः ब्रह्म एव लोकः, न ब्रह्मणः लोकः।

**१६. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः।**

" दहरोऽस्मिन्नन्तराकाशः " इति प्रकृत्य " अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय " इति ( छां ८.४.१ ); cf. ब्र ३.८.९ quoted in सू. ११ above.

**१७. प्रसिद्धेश्च।**

**१८. इतरपरामर्शात्स इति चेन्न, असंभवात्॥**

इतरपरामर्शस्तु " अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति " ( छां ८.३.४ ). इतरस्य = शारीरस्य आत्मनः; परामशः।

( ६ ) ईश्वराक्षिपुरुषाधिकरणम्। सू. १९–२१

**१९. उत्तराच्चेदाविर्भूतस्वरूपस्तु।**

उत्तरग्रन्थे जीवात्मनो निर्देशः दृश्यते यथा " य आत्माऽपहत-पाप्मा " ( छां ८.७.१ ); " य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा " ( छां ८.७.४ ); " एतं त्वेव ते भूयोऽनुव्याख्यास्यामि " ( छां ८.९.३ ); " तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मा " ( छां ८.११.१ ) इत्यादिना जीवं व्याख्यास्यति। बाढम्। तथापि स जाव आविर्भूतस्वरूप एव " स्वेन रूपेणाभिनिष्पद्यते " इति पूर्वस्मिन् वाक्ये उक्तत्वात्।

N. B. – for the meaning of आविर्भाव see ब्र. सू. 4.4.1 " संपद्याविर्भावः स्वेन शब्दात्। " R. takes आविर्भाव in a different sense.

**२०. अन्यार्थश्च परामर्शः।**

" स्वेन रूपेण " इत्यत्र जीवस्वरूपपर्यवसानं ग्राह्यमित्युक्तम्।

अथैवं सति जीवोपासनोपदेशानर्थक्यं मन्येत तदा तस्य जीवस्य परमेश्वर-स्वरूपपर्यवसायित्वं द्रष्टव्यम्। तथा न कश्चिद्विरोधः। अन्यार्थः = परमेश्वर-रूपपर्यवसायित्वमित्यर्थः। cf. ब्र. सू. 1.4.18 अन्यार्थं तु जैमिनिः etc. for a similar wording.

**२१. अल्पश्रुतेरिति चेत्तदुक्तम्॥**

" अर्भकौकस्त्वा "दित्यादिसूत्रे ( ब्र. सू. १.२.७ ) " निचाय्य-त्वादि "त्यादयः हेतवः उक्ताः।

( ७ ) अनुकृत्यधिकरणम। सू. २२–२३

**२२. अनुकृतेस्तस्य च।**

" तमेव भान्तमनु भाति सवम् " ( क ५.१५; मुं २.२.११ ); " भारूपः सत्यसंकल्पः " इति च ( छां ३.१४.२ )

R. does not consider this to be a separate अधिकरण.

**२३. अपि च स्मर्यते॥**

" न तद्भासयते सूर्यो न शशांको न पावकः " इति ( गी १५.६ )

( ८ ) प्रमिताधिकरणम्। सू. २४–२५

**२४. शब्दादेव प्रमितः।**

" अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः॥ एतद्वै तत्॥ " इति ( क ४.१३ ). शब्दात् = ईशान इतिश्रवणात्।

**२५. हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥**

मनुष्यहृदयापेक्षया अंगुष्ठमात्रत्वम्। हृदयापेक्षा तु " अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति " ( क ४.१२ ) इत्यादिना पूर्वापरग्रंथात्। ( But शंकराचाय illustrates this सूत्र by reference to क ६.१७ " अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। ")

( ९ ) देवताधिकरणम् । सू. २६–३३

**२६. तदुपर्यपि बादरायणः संभवात् ।**

तदुपरि = मनुष्योपरि देवादिकानामित्यर्थः । अधिकारः ब्रह्मविद्याविषये वर्तते इति बादरायणः मन्यते ।

N. B. – from this on, some consider a new Adhikarana.

**२७. विरोधः कर्मणीति चेन्न, अनेकप्रतिपत्तेर्दर्शनात् ।**

यज्ञयागादि कर्मांगत्वेन न विरोधः । एकस्यापि देवतात्मनः युगपदनेकस्वरूपप्रतिपत्तिः " ... त्रयस्त्रिंशत्त्वेव देवाः " ( बृ. ३.९ २ ) इत्यत्र दृश्यते ।

**२८. शब्द इति चेन्न, अतः प्रभवात् प्रत्यक्षानुमानाभ्याम् ।**

शब्दे विरोध इति चेन्न । शब्दस्य नित्यत्वात् । ततः देवादीनां प्रभवात् । प्रत्यक्षं च देवतादीनां बहुत्वम् । Here Shankara dwells upon नित्यत्व of शब्द or speech and rejects स्फोटवाद. The स्फोट doctrine discussed.

**२९. अत एव नित्यत्वम् ।**

नित्यत्वं वेदस्य । Here भाष्य quotes

" युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥ "

( मभा १२.२१०.१९; CE 12.203.17 )

**३०. समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च।**

दर्शनात् = " सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् " ( ऋ १०.१९०.३ ) इत्यादि । स्मृतिश्च " ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः " इति ( मभा १२.२३३.२५; CE १२.२२४.५६ with vl. सृष्टयः for दृष्टयः )

**३१. मध्वादिष्वसंभवादनधिकारं जैमिनिः।**

मधुविद्यायामसंभवात् जैमिनिः देवानां ब्रह्मविद्यायामनधिकार इति मन्यते।

**३२. ज्योतिषि भावाच्च।**

ज्योतिषि = द्युस्थानगतज्योतिर्मण्डलमेव देवतारूपम्। अतो न देवतानां विग्रहवत्त्वम्। अतो न ब्रह्मविद्यायामधिकारः।

**३३. भावं तु बादरायणोऽस्ति हि॥**

भावमधिकारस्य। अस्ति अधिकार इति बादरायणः मन्यते। Shankara here explains अर्थवाद. Also a reference to सार्वभौम क्षत्रिय.

( १० ) अपशूद्राधिकरणम। सू. ३४–३८

**३४. शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि।**

न शूद्रस्याधिकारः "अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" ( छां ४.२.३ ). हारेत्वा = हारेण सहितो रथः। इत्वा = रथः। जानश्रुति was refused by रैक्व. Some consider this to be a new Adhikarana.

**३५. क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्।**

उत्तरत्र ( छां ४.३.५ ) चैत्ररथिः क्षत्रियः संकीर्त्यते। ( See तांब्रा २०.१२.५ ) "एतेन वै चित्ररथं कापेया अयाजयन्"। तेन सह जानश्रुतेः संबंधात्, जानश्रुतेः क्षत्रियत्वे लिङ्गम्।

**३६. संस्कारपरामर्शात् तदभावाभिलापाच्च।**

"न च संस्कारमर्हति" ( मनु १०.१२६ ) इति शूद्रस्य संस्कारानर्हत्वमिति।

**३७. तदभावनिर्धारणे च प्रवृत्तेः।**

गौतमः जाबालमुपनेतुं प्रवृत्तः, यदा तस्य सत्यवचनेन ब्राह्मणत्वमभ्यजानात्। ( See छां ४.४.१–५ ).

**३८. श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥**

( ११ ) कम्पनाधिकरणम् । सू. ३९

**३९. कम्पनात् ॥**

" जगत् सर्वं प्राण एजति निःसृतम् । " ( क ६.२ ) इत्यत्र एजति = कम्पते । Not considered to be a seperate Adhikarana by R.

( १२ ) ज्योतिरधिकरणम् । सू. ४०

**४०. ज्योतिर्दर्शनात् ॥**

" एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते " इत्यत्र ( छां ८.१२.३ ) ज्योतिः = ब्रह्म ।

N. B. – कम्पनात् and ज्योतिर्दर्शनात् are considered as separate अधिकरणs; but some, e.g. रामानुज, take them as part of दहराधिकरण (rather of प्रमिताधिकरण), giving further arguments in support of the preceding; ज्योतिर्दर्शनात् he takes to be a compound word.

( १३ ) अर्थान्तरत्वव्यपदेशाधिकरणम् । सू० ४१

**४१. आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥**

" आकाशो वै नाम नामरूपयोर्निर्वहिता । ते यदन्तरा तद् ब्रह्म तदमृतम् । " ( छां ८.१४.१ ). According to R. the choice is between जीव and ब्रह्म; and जीव is shown to be different by सुषुप्ति and उत्क्रान्ति passages.

( १४ ) सुषुप्त्युत्क्रान्त्यधिकरणम् । सू० ४२–४३

**४२. सुषुप्त्युत्क्रान्त्योर्भेदेन ।**

बृहदारण्यके चतुर्थाध्याये आत्मविषयः प्रपंचः ब्रह्मपरः । R. does not consider 42 & 43 as a separate Adhikarana.

**४३. पत्यादिशब्देभ्यः ॥**

"सर्वस्याधिपतिः" (बृ ४.४.२२) इत्यत्र 'पति'शब्दस्य दृश्यमानत्वात्। cf. Sūtra 4.4.16–17.

N. B. – 42 and 43 are considered as separate अधिकरणs; but Rāmānuja considers them as part of 13th.

॥ इति प्रथमाध्यायस्य तृतीयपादः ॥

## ॥ अथ प्रथमाध्यायस्य चतुर्थपादः ॥

( १ ) आनुमानिकाधिकरणम । सू. १–७

**१. आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च।**

एकेषाम् = काठकेः –

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः॥ (क ३.१०–११)

Here अव्यक्त does not mean Sānkhya प्रधान, because these verses are preceded by chariot-simile and by comparing the two, अव्यक्त would evidently appear to be शरार. The chariot-simile is as follows :–

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥ ( क ३.३–४ )

The celebrated chariot-simile-see Plato's Phaedrus ( 240 b ff. ).

**२. सूक्ष्मं तु तदर्हत्वात्।**

Shankara interprets सूक्ष्म in this Sūtra to be स्थूलशरीर mentioned in the above chariot-simile. But it may be taken to mean that शरीर mentioned above is सूक्ष्म.

३. तदधीनत्वादर्थवत्।

अव्यक्तं तु ईश्वराधीनमत एव न सांख्यम् ( i.e. सांख्याभिमतम् ).

४. ज्ञेयत्वावचनाच्च।

The Sānkhya प्रधान is ज्ञेय; but the above-mentioned अव्यक्त is not said to be ज्ञेय.

५. वदतीति चेन्न, प्राज्ञो हि प्रकरणात्।

" अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तन्मृत्युमुखात् प्रमुच्यते॥" ( क ३.१५ ).

Here अशब्द etc. is not प्रधान but प्राज्ञः.

६. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च।

In the Kāthaka अग्नि, जीव and परमात्मा are the only three discussed and asked for.

७. महद्वच्च॥

" बुद्धेरात्मा महान् परः " ( क ३ १० ) इत्यत्र 'महत्' यथा न सांख्योक्तं तद्वत् 'अव्यक्तं' च।

( २ ) चमसाधिकरणम्। सू. ८–१०

८. चमसवदविशेषात्।

" अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥"
( श्वे ४.५ ). Here अजा is not प्रधान, just as in " अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः " ( बृ २.२.३ ) चमस does not mean 'spoon' or 'cup' but ' human head. '

९. ज्योतिरुपक्रमा तु तथा ह्यधीयत एके।

एके = छन्दोगाः; तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति। "यदग्ने रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्य" इति। ( छां ६.४.१ ).

**१०. कल्पनोपदेशाच्च मध्वादिवदविरोधः॥**

अजा is simply figurative ( कल्पना ) as मधु in आदित्य etc.

( ३ ) संख्योपसंग्रहाधिकरणम्। सू. ११–१३

**११. न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च।**

"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्॥" ( बृ ४.४.१७ )

Here पञ्च पञ्चजनाः does not mean 25 गुणs of Sānkhya.

**१२. प्राणादयो वाक्यशेषात्।**

They are प्राण etc, for afterwards we have "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः।" ( बृ ४.४.२१ माध्यं. ).

**१३. ज्योतिषैकेषामसत्यन्ने॥**

Kānvas do not read अन्न in the above passage. In their case the number 'five' is to be completed by taking ज्योतिस् for अन्न. So after all पञ्च पञ्चजनाः means only 'five' & not 25.

( ४ ) कारणत्वाधिकरणम्। सू. १४–१५

**१४. कारणत्वन चाकाशादिषु यथाव्यपदिष्टोक्तेः।**

Creation is variously described in the श्रुति. Sometimes आकाश is the first, sometimes आपः; but everywhere the final cause ( कारण ) is the

same or as described in the previous pādas. So no discrepancy.

१५. समाकर्षात् ॥

" असद्वा इदमग्र आसीत् " ( तै २.७ ) इत्यादौ 'असत्' इत्यस्य प्राक्सृष्टेः अव्याकृत ब्रह्मेत्यर्थः।

( ५ ) बालाक्यधिकरणम्। सू. १६–१८

१६. जगद्वाचित्वात्।

" यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्य इति। " ( कौ ४.१८ ). Here एतत् कर्म = जगत्; hence neither प्राण nor पुरुष is referred to but परमात्मा.

१७. जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्।

See sūhra 1.1.31.

१८. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥

अन्यार्थं has the same meaning here as in sūhra 1.3.20 " अन्यार्थश्च परामर्शः " इति।

( ६ ) वाक्यान्वयाधिकरणम्। सू. १९–२२

१९. वाक्यान्वयात्।

" न वा अरे पत्युः कामाय " इत्युपक्रम्य " न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्। " ( बृ २.४.५ ). Here आत्मा is not जीव or पुरुष of the Sānkhyas but परमात्मा. " न वा अरे पत्युः " is a श्रुति which declares selfish nature of every act and insists on finding out the Self. This R. considers to be directed against the पुरुष of the Sānkhyas.

**२०. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः।**

प्रतिज्ञा तु पूर्ववाक्ये 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इति। तथा 'इदं सर्वं यदयमात्मा' इति च। तस्याः सिद्धिं "न वा अरे" इत्यादिना सूयचतीति आश्मरथ्यः मन्यते।

**२१. उत्क्रमिष्यत एवंभावादित्यौडुलोमिः।**

औडुलोमिः उत्क्रान्तजीवपरं मन्यते। उत्क्रान्तजीवे परमेश्वररूपत्वात्तस्य।

**२२. अवस्थितेरिति काशकृत्स्नः॥**

परमेश्वर lives in जीव and so both are one.

( ७ ) प्रकृत्यधिकरणम्। सू. २३–२७

**२३. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्।**

ब्रह्म is also the प्रकृति or the उपादानकारण of the world. प्रतिज्ञा यथा – "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञात"मिति ( छां ६.१.२–३ ). दृष्टान्तो यथा – "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" इत्यादि (छां ६.१.४). According to R. this is directed against सेश्वरसांख्यs who consider प्रकृति as independent though overlorded by ईश्वर. The view may be accepted. In fact, Shankara means the same. But the real Adhikarana against सेश्वरसांख्यs is 2.2.37–41 ( पत्यधिकरणम् ).

**२४. अभिध्योपदेशाच्च।**

"सोऽकामयत" ( तै २.६ ), "तदैक्षत" ( छां ६.२.३ ), इत्याद्यभिध्योपदेशः श्रूयते। ततश्च 'बहु स्याम्' ( छां ६.२.३ ) इत्यादि तस्यैव बहुत्वेन जगदारम्भकत्वम्।

**२५. साक्षाच्चोभयाम्नानात्।**

( उभय ) उभौ प्रभवप्रलयौ; साक्षात् यथा – "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति।" इत्यादि ( छां १.९.१ ).

**२६. आत्मकृतेः परिणामात्।**

"तदात्मानं स्वयमकुरुत" ( तै २ ७ ) इत्यादि

**२७. योनिश्च हि गीयते॥**

यथा – "कर्तारमीशं पुरुषं ब्रह्मयोनिम्।" ( मुं ३.१ ३ ), "यद्-भूतयोनिं परिपश्यन्ति धीराः।" ( मुं १.१.६ )

( ८ ) सर्वव्याख्यानाधिकरणम्। सू. २८

**२८. एतेन सर्वे व्याख्याता व्याख्याताः॥**

Summary :–

शारीरकस्याद्यपादे चतुःसूत्र्या अनन्तरम्।
ईक्षतेरानन्दमयोऽन्तराकाश एव च ॥ १ ॥
प्राणो ज्योतिस्तथा प्राणः पुनः पादे द्वितीयके।
सर्वत्रात्ता गुहां विष्टौ आत्मानौ च तथान्तरः ॥ २ ॥
अन्तर्यामी ह्यदृश्यादिः वैश्वानर इति क्रमात्।
अथ पादे तृतीये तु द्युभ्वाद्यायतनं ततः ॥ ३ ॥
भूमा तथा चाक्षरं च तत ईक्षतिकर्म सः।
दहरश्च स्वरूपाविर्भावानुकृतिसाधितः ॥ ४ ॥
ततः प्रमित इत्यत्र शब्दाच्छूद्रदिवौकसाम्।
प्रोक्त आकम्पनज्योतिरधिकारः प्रसङ्गतः ॥ ५ ॥
तदनन्तरमाकाशः सुषुप्त्या चरमः स्मृतः।
पादे चतुर्थे काठकोक्तशरीररथरूपके ॥ ६ ॥

नानुमानिकमव्यक्तं न महच्चेति दर्शितम् ।
अजां चमसवच्चापि निराकृत्य गुणांस्तथा ॥ ७ ॥

पञ्च पञ्च न संख्योपसंग्रहादित्यतः परम् ।
कारणत्वेन ब्रह्मैव जगद्वाचित्वमस्य च ॥ ८ ॥

वाक्यान्वयादभेदत्वमात्मनोश्च प्रदर्शितम् ।
ऋषित्रयमतान्युक्त्वा ततश्च परमात्मनः ।
प्रकृतिश्चेत्यनेनान्ते उपादानत्वसंग्रहः ॥ ९ ॥

॥ इति समन्वयाख्यप्रथमाध्यायस्याधिकरणानामनुक्रमः ॥

॥ इति प्रथमोऽध्यायः ॥

# ॥ अथ अविरोधाख्यद्वितीयाध्यायस्य प्रथमपादः ॥

( १ ) स्मृत्यधिकरणम् । सू. १–२

**१. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न, अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ।**

वेदान्तसमन्वयः सांख्यस्मृत्या विरुध्यते इति चेत् सांख्याविरोधितया व्याख्याने अन्यस्मृति ( मन्वादि ) विरोधः प्रसज्येत । एतावता सांख्यस्मृतिविरोधः अन्यस्मृतिविरोधो वा दुरपास्यः इति ।

**२. इतरेषां चानुपलब्धेः ॥**

प्रधानादितराणि महदादीनि जगत्कारणानि वेदे लोके च नोपलभ्यन्ते ।

( २ ) योगप्रत्युक्त्यधिकरणम । सू. ३

**३. एतेन योगः प्रत्युक्तः ॥**

Shankara allows Yoga and Sānkhya only so far as they do not contradict the Vedas. येन त्वंशेन न विरुध्येते तेनेष्टमेव सांख्ययोगस्मृत्योः सावकाशत्वम् । ( P. 430 Vol. I of ब्रह्मसूत्रs published in the Ānandāshram Sanskrit series ).

( ३ ) विलक्षणत्वाधिकरणम् । सू. ४–११

**४. न विलक्षणत्वादस्य तथात्वं च शब्दात् ।**

ब्रह्म सचेतनं शुद्धम्, जगत् तद्विलक्षणं अचेतनं अशुद्धम् । श्रुतावपि तथा दर्शनात् – “ विज्ञानं चाविज्ञानं च ” ( तै २.६ ) इत्यादौ । अत एव न ब्रह्म जगतः कारणं भवितुमर्हति । इति आक्षेपमुत्थापयति । सिद्धान्तस्तु ६ सूत्रे वक्ष्यति ।

**५. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ।**

यदि जगदचेतनं कथं तर्हि “ आपोऽब्रुवन् ” ( शब्रा ६.१.३.४ ),

" ता आप ऐक्षन्त " ( छां ६.२.४. ) इत्यादि । अभिमानिदेवता अत्र गृह्यन्ते । अतो न दोषः, नापि जगतोऽचेतनत्वं बाध्यत इति ।

**६. दृश्यते तु ।**

बाढम् । परं चेतनादचेतनोत्पत्तिः लोके दृश्यते यथा पुरुषात् लोमनखादीति । अत एव वैलक्षण्यं, न विरोधः । 'तु' शब्दः आशङ्कां निवर्तयति ।

**७. असदितिचेन्न, प्रतिषेधमात्रत्वात् ।**

" असद्वा इदमग्र आसीत् " ( तै २ ७ ), " असदेवेदमग्र आसीत् " ( छां ३.१९.१ ) इत्यत्र जगद्रूपस्य सत्कार्यस्य असत्कारणं श्रूयते । तन्न युक्तम् । इत्याक्षेपः । सतः एव सदुत्पत्तेः । बाढम् । 'असत्' इति केवलप्रतिषेधपरम् । तथा न विरोधः । Cf. ब्रसू १ ४.१५ 'समाकर्षात्' ।

**८. अपीतौ तद्वत् प्रसंगादसमञ्जसम् ।**

अपीतौ = प्रलये; कार्यं कारणे लीयमानं कारणं ( निर्विकारं ब्रह्म ) दूषयेत् इति हेतोः असमञ्जसं वेदान्तदर्शनम् ।

**९. न तु दृष्टान्तभावात् ।**

न असमञ्जसम् । कुतः । दृश्यते हि लोके घटादिकं मृद्भावमापन्नं न मृदं दूषयति इति ।

**१०. स्वपक्षदोषाच्च ।**

प्रधानवादे अणुवादे च इदमेव प्रसज्यते ।

**११. तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥**

ननु एकः तर्कः अप्रतिष्ठितः इति चेत् अन्यः तर्कः आश्रयितव्यः । बाढम् । तथापि स एव आक्षेपः पुनरुद्भवेत् । अतो न तर्केणात्र सिद्धिः ।

N. B. – Sūtras 4–11 are considered as one अधिकरण by some ( i.e. by रामानुज, who divides the eleventh sūtra into two ).

( ४ ) शिष्टापरिग्रहाधिकरणम्। सू. १२

**१२. एतेन शिष्टापरिग्रहा अपि व्याख्याताः॥**

परिगृह्यन्त इति परिग्रहाः। न परिग्रहाः अपरिग्रहाः। शिष्टानामपरिग्रहाः शिष्टापरिग्रहाः। साङ्ख्यानां मतं कश्चिच्छिष्टैः केनचिदंशेन परिगृहीतं दृश्यते। तस्य निराकरणात् अन्यत् यत्किंचिच्छिष्टैः अनादृतं तदपि निराकृतं भवतीत्यर्थः। Cf. अपरिग्रह in 2.2.17 'अपरिग्रहाच्चात्यन्तमनपेक्षा'.

( ५ ) भोक्त्रापत्त्यधिकरणम्। सू. १३

**१३. भोक्त्रापत्तेरविभागश्चेत्, स्याल्लोकवत्॥**

यदीदं जगत् सर्वं ब्रह्मसंभवं कथं तर्हि भोक्तृभोग्यविभागः। भोक्ता देवदत्तः; भोग्य ओदन इति। उच्यते। लोकवत्। समुद्रात् फेनवीचितरंगबुद्बुदादीनां यथा भेदः लोकैः कल्प्यते तद्वत् भोक्तृभोग्यभेदः कल्पितव्यः। तन न कश्चिद्विरोधः।

R. takes this sūtra to refer to ब्रह्म and जीव; and not to ब्रह्म and जगत् ( that is जीव and 'all' ). लोकवत according to R. refers to king and his servants. This, however, does not help R's special view in any way. 1 think it refers more to सांख्य duality. Cf. सांख्यकारिका 17 " पुरुषोऽस्ति भोक्तृभावात् " etc. Also सांख्यसूत्र 1.143 "भोक्तृभावात्".

( ६ ) आरम्भणाधिकरणम्। सू. १४–२०

**१४. तदनन्यत्वमारम्भणशब्दादिभ्यः।**

परमार्थतस्तु अयं विभागः न विद्यते। " यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातँ स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् " ( छां ६ १.४ ) इत्यादिश्रुतेः। कार्यस्य कारणस्य च अनन्यत्वं अभेदः तादात्म्यं वा।

In the comm. on this सूत्र, शंकर defines माया as follows :-

" सर्वज्ञस्येश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपंचबीजभूते सर्वज्ञस्येश्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते। " Also quotes गीता ५.१५ :— " नादत्ते कस्यचित् पापम्। "

**१५. भावे चोपलब्धेः।**

अत एव चानन्यत्वं कार्यकारणयोः। यतः कारणस्य 'भावे' एव कार्यस्योत्पत्तिः, नान्यथा। तस्मात् तदात्मकं = कार्यात्मकं सदेव कारणमवश्यमभ्युपगन्तव्यम्।

R. does not take अनन्यत्व literally as Shankara does.

**१६. सत्त्वाच्चावरस्य।**

प्रागुत्पत्तेः कारणात्मनैव अवरकालीनस्य कार्यस्य सत्त्वं भावः स्थितिर्वा श्रूयते। " सदेव सोम्येदमग्र आसीत्। " ( छां ६.२.१ ); अतः कार्यकारणयोरनन्यत्वं सिद्धम्।

**१७. असद्व्यपदेशान्नेति चेन्न, धर्मान्तरेण वाक्यशेषात्।**

( Cf. सूत्र ७ above ) असच्छब्दः प्रतिषेधमात्रपरः।

**१८. युक्तेः शब्दान्तराच्च।**

युक्तिरपि कार्यस्य कारणत्वेनानन्यत्वं कार्यस्य च उत्पत्तेः प्राक् सत्त्वं साधयति। Shankara here refutes the समवाय doctrine of नैयायिकs, as well as the non-existence of कार्य doctrine. Reference to पूर्णवर्मा is also contained in this section " ... वन्ध्यापुत्रो राजा बभूव प्राक् पूर्णवर्मणोऽभिषेकात् " ( P. 479 of the आनन्दाश्रम edition of the ब्रह्मसूत्रशांकरभाष्य )। Cf. छां. शांकरभाष्य ( on 2.23.1 ) " यथा पूर्णवर्मणः सेवा भक्तपरिधानमात्रफला राजवर्मणस्तु सेवा राज्यतल्यफलेति तद्वत् "

( P. 104 of the आनन्दाश्रम edition ). शब्दान्तरं च " सदेव सोम्येदमग्र आसी "दित्यादि सत्कार्यतां दर्शयति। ( छां ६.२.१ ).

**१९. पटवच्च।**

पटः प्रसारितः संवेष्टितश्च यथा एक एव तथा कार्यं कारणं च एकमेव। यद्वा यथा तन्तुसमवायः पटश्च अभिन्नः तथा ब्रह्म जगच्चाभिन्नम्।

**२०. यथा च प्राणादि॥**

प्राणापानादिभिन्नाः प्राणाः प्राणायामेन निरुद्धाः जीवनमात्रक्रियां कुर्वन्ति नाकुञ्चनप्रसारणादिकम्। अतः प्राणस्यैकत्वं यथाऽनुमीयते तथा जगद्ब्रह्मणोरेकत्वमित्यर्थः।

( ७ ) इतरव्यपदेशाधिकरणम्। सू. २१–२३

**२१. इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः।**

"तत्त्वमसी"त्यादौ ( छां ६.८.७ ) जीवात्मनोर्भेदकथनं = इतरत्वकथनं श्रूयते। 'तत्' 'त्वम्' शब्दाभ्याम्। एवं सति कथं एकः अन्यस्य अहितं ( संसारित्वादि ) आचरति इत्याक्षेपः। हितं वा न कुरुते इति हिताकरणात् अन्याय्या चेतनाज्जगदुत्पत्तिः।

**२२. अधिकं तु भेदनिर्देशात्।**

न। शारीरादधिकं सर्वज्ञं ब्रह्म इति ब्रूमः। अतो न व्यावहारिकन्यायस्य अत्र उत्प्रेक्षा कार्या।

**२३. अश्मादिवच्च तदनुपपत्तिः॥**

यथा सर्वाश्मनां एकत्वेऽपि वैडूर्यसूर्यकान्तादिर्भेदः दृश्यते तद्वत् जीवपरमात्मनोर्भेदोऽवगन्तव्यः।

( ८ ) उपसंहारदर्शनाधिकरणम्। सू. २४–२५

**२४. उपसंहारदर्शनान्नेति चेन्न, क्षीरवद्धि।**

उपसंहारः = उपकरणं यथा कुलालस्य मृद्दण्डादि लोके दृश्यते तथा ब्रह्मणः उपकरणाभावात् कथं सृष्टिरिति चेत्। यथा क्षीरं स्वयमेव परिणमति तद्वदिति वाच्यम्। A modern illustration would be

"Radium", which transforms itself into "Helium" without any external cause.

**२५. देवादिवदपि लोके ॥**

यथा देवाः पितरः ऋषयः विनैवोपकरणं सृष्टिं कुर्वते तद्वत् ब्रह्मणः जगत्कर्तृकत्वमवगन्तव्यम्।

( ९ ) कृत्स्नप्रसक्त्यधिकरणम्। सू. २६–२९

**२६. कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा।**

ब्रह्म किं सर्वांशेन परिणमते उत एकांशेन। आद्ये कृत्स्नस्य ब्रह्मणः परिणामात् अव्याकृतं न किमपि परिशिष्येत। ततश्च मूलोच्छेदः एव प्रसज्येत। द्वितीये अवयवसंभवात् "निष्कलं ... निरञ्जनम्" ( श्वे ६.१९ ) इत्यादिश्रुतिः बाध्येत।

**२७. श्रुतेस्तु शब्दमूलत्वात्।**

यया श्रुत्या निरवयवत्वं प्रतिपादितं सा एव श्रुतिः – "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि।" ( छां ३.१२.६ ) इत्यादिना अवयवविकारत्वं ब्रह्मणः दर्शयति। श्रुतिस्तु अत्र प्रमाणम्। "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।" इति स्मृतेश्च ( महाभारत – CE ६.६.११ with साधयेत् for योजयेत् as the reading; योजयेत् is not found in any Ms.)। नात्र युक्तिरेव प्रमाणम्।

**२८. आत्मनि चैवं विचित्राश्च हि।**

आत्मनि = जीवात्मनि चैवंविधाः स्वरूपाऽमर्दैन विचित्राः = स्वप्नसृष्टिवद् विचित्राः सृष्टयः दृश्यन्ते। अतो न दोषः। स्वप्ने – "न तत्र रथा न रथयोगाः न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते" ( बृ ४.३.१० ) इति श्रुतिश्च वैचित्र्यं दर्शयति।

**२९. स्वपक्षदोषाच्च ॥**

प्रधानपक्षे अणुवादपक्षे चायमेव दोषः। एकोऽणुरन्येनाणुना कथं

संबध्यते। सर्वात्मना इति चेत् द्व्यणुकदैर्घ्यादेरसिद्धिः। एकांशेन इति चेत् अणोरंशत्वं प्रसज्येत।

( १० ) सर्वोपेताधिकरणम्। सू. ३०–३१

**३०. सर्वोपेता च तद्दर्शनात्।**

सर्वोपेतत्वं सर्वशक्तिमत्त्वं च ब्रह्मणः दृश्यते। "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तः" इत्यादि ( छां ३.१४.२ )।

**३१. विकरणत्वान्नेति चेत्, तदुक्तम्॥**

सर्वशक्तिमत्त्वं करणैरिन्द्रियैः रहितस्य नोपपद्यते इति चेत्। तदुक्तम् "उपसंहारदर्शना"दित्यत्र ( सूत्र 24 above )। तथा च श्रुतिः-

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।" ( श्वे ३.१९ ) इत्यादिः अकरणस्यापि ब्रह्मणः सर्वसामर्थ्योपेतत्वं दर्शयति।

( ११ ) प्रयोजनवत्त्वाधिकरणम। सू. ३२–३३

**३२. न प्रयोजनवत्त्वात्।**

ब्रह्मणः जगत्कर्तृत्वे न किंचित् प्रयोजनम्। अतः तस्य जगत्कर्तृत्वं न युज्यते इति आक्षेपः।

**३३. लोकवत्तु लीलाकैवल्यम्॥**

अविद्या खलु परमेश्वरस्य स्वभावः लीला वा, तयैव केवलं युक्तः परमेश्वरः जगत् सृजति।

( १२ ) वैषम्यनैर्घृण्याधिकरणम। सू. ३४–३६

**३४. वैषम्यनैर्घृण्ये न, सापेक्षत्वात्, तथाहि दर्शयति।**

सापेक्षत्वं च पुण्यापुण्यकर्मापेक्षत्वम्। "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इत्यादिश्रुतिः ( बृ ३.२.१३ )। "ये यथा मां प्रपद्यन्ते" इत्यादिस्मृतिश्च ( गी ४.११ )। ईश्वरस्तु पर्जन्यवत् द्रष्टव्यः। न प्रवर्तकः वैषम्यस्येति। But see comm. on 2.2.37 infra.

**३५. न कर्माविभागादिति चेन्न, अनादित्वात्।**

कल्पारम्भे कर्मणः अविभागः पापपुण्यत्वेन असंस्थानमिति चेत् । न । अनादित्वात् संसारस्य ।

**३६. उपपद्यते चाप्युपलभ्यते च ॥**

अनादित्वं संसारस्य उपपद्यते । उपलभ्यते च “सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय”दित्यादौ ( ऋ १०.१९०.३ ) । “न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा” इत्यत्र गीतासु ( १५.३ ) ।

( १३ ) सर्वधर्मोपपत्त्यधिकरणम् । सू. ३७

**३७. सर्वधर्मोपपत्तेश्च ॥**

ब्रह्मणि सर्वे कारणधर्माः सर्वज्ञत्वसर्वशक्तिमत्त्वादयः उपपद्यन्ते । न तथाऽन्यत्रेत्यर्थः ॥

**॥ इति द्वितीयाध्यायस्य प्रथमपादः ॥**

# ॥ अथ द्वितीयाध्यायस्य द्वितीयपादः ॥

( १ ) रचनानुपपत्त्यधिकरणम् । सू० १–१०

**१. रचनानुपपत्तेश्च नानुमानम् ।**

(सांख्यमतखण्डनम्) प्रधानवादे रचनानुपपत्तिः अत एव सोऽग्राह्यः।

**२. प्रवृत्तेश्च ।**

प्रवृत्तिः ( प्रधानस्य ) नोपपद्यते ।

**३. पयोऽम्बुवच्चेत् तत्रापि ।**

" वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य " ( सां. का. ५७ ) तथा प्रधानस्य पुरुषार्थं प्रवृत्तिरिति चेन्न, दृष्टान्ते धेन्वाः वत्सस्नेहापेक्षया प्रवृत्तिः। नापि नद्यादिजलवत् ।

**४. व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ।**

सत्त्वरजस्तमोगुणानां साम्यव्यतिरेकेण प्रधानं न तिष्ठति। न च साम्यत्यागे किंचित् कारणमस्ति । अनपेक्षत्वात् ।

**५. अन्यत्राभावाच्च न तृणादिवत् ।**

न निमित्तमनपेक्ष्य किंचित् अपि परिणंस्यते। नापि धेनुं विना तृणस्य क्षीरीभावो दृश्यते । अत एव न प्रधानस्य स्वतः एव प्रवृत्तिर्भवितुमर्हति ।

**६. अभ्युपगमेऽप्यर्थाभावात् ।**

प्रवृत्तेः यथाकथंचिदभ्युपगमेऽपि अर्थस्य प्रयोजनस्य अभावो वर्तते । कथम्। पुरुषस्य उदासीनत्वात् ।

**७. पुरुषाश्मवदिति चेत् तथापि ।**

"पङ्ग्वन्धवदुभयोः (प्रधानपुरुषयोः) संयोगः" ( सां. का. २१ ) इति चेत्। अथवा अयस्कान्ताश्म-अयोवत् इतिः चेत् । तदपि न संभवति। दृष्टान्तद्वयेऽपि प्रवृत्तिकरणे हेतुर्विद्यते। न तथा उदासीनपुरुषाचेतनप्रधानयोः।

**८. अङ्गित्वानुपपत्तेश्च।**

बाह्यस्य क्षोभयितुरभावे सत्त्वरजस्तमसां साम्येनावस्थितानां परस्परं प्रति अङ्गांगिभावस्यानुपपत्तिः।

**९. अन्यथानुमितौ च ज्ञशक्तिवियोगात्।**

यथाकथंचित् प्रधानस्य अन्यथाप्रवृत्तिः साध्येत तथापि ज्ञशक्ति-वियोगात् रचनानुपपत्त्यादयो दोषा अपरिहार्या एव।

**१०. विप्रतिषेधाच्चासमञ्जसम्॥**

सर्वथा प्रधानवादोऽसमञ्जसः।

( २ ) महद्दीर्घाधिकरणम्। सू. ११

**११. महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्॥**

( वैशेषिकमतखण्डनम् ) परमाणुः पारिमाण्डल्यगुणः द्व्यणुः ह्रस्वः अणुत्ववांश्च। त्र्यणुः द्व्यणुकत्रयेण सिध्यति नाणुत्रयेण। स च पुनर्महत्त्व-दीर्घत्वसंपन्नो भवति। तत्र यथा त्र्यणुकस्य महत्त्वदीर्घत्वे परमाणुद्व्यणु-कगतह्रस्वत्वपारिमाण्डल्याभ्यां सिध्यतः तथा चेतनाद् ब्रह्मणः अचेतनस्य जगतः उत्पत्तिः भवितुमर्हति। Vedāntic doctrine supported by Vaisheshika argument.

( ३ ) परमाणुजगदकारणत्वाधिकरणम। सू. १२–१७

**१२. उभयथापि न कर्म, अतस्तदभावः।**

परमाणूनां प्रथमः संयोगः कथं भवति। अदृष्टयोगादिति चेत्। तददृष्टं किं आत्मसमवायि अथवा अणुसमवायि। उभयथाऽपि न सिद्धिः। कथम्। अदृष्टं नाम अचेतनम्। अत एव तस्य कोऽपि अन्यः सचेतनः प्रवर्तकोऽपेक्षितः। आत्मा इति चेत्। वैशेषिकमते आत्मनः ज्वलनत्वं ( sic ) ( ज्ञानवत्त्वं ? ) अणुसंयोगोद्भूतं इत्यभ्युपगमः। अतः आत्मनोऽपि संयोगे न प्रवर्तकत्वम्। अत एव उभयथापि न कर्म ( संयोगात्मकं ) सिध्यति।

**१३. समवायाभ्युपगमाच्च साम्यादनवस्थितेः।**

यदि समवायः कारणत्वेनाभ्युपगम्येत तथापि कर्माभाव एव प्रसज्येत। कुतः। यथाहि अणुभ्यामत्यन्तभिन्नं सद् द्व्यणुकं समवायसंबन्धेन संबध्यते, तथा समवायोऽपि समवायिभ्यः अत्यन्ताभिन्नः सन् समवाय-समवायिसंबन्धे संबन्धान्तरमपेक्षते। अत्यन्तभेदस्य साम्यात्। एवं सति ततश्च तस्य तस्य अन्योन्यः संबन्धोऽपेक्षित इत्यनवस्था प्रसज्येत।

**१४. नित्यमेव च भावात्।**

ननु परमाणूनां स्वभाव एव कारणमिति चेत्। तस्य नित्यत्वात् प्रलयाभावप्रसङ्गः। तदा सृष्टेः नित्यत्वादमोक्षप्रसङ्गः।

**१५. रूपादिमत्त्वाच्च विपर्ययो दर्शनात्।**

चतुर्विधा रूपादिमन्तः परमाणवः चतुर्विधस्य रूपादिमतः पृथिव्यादेरारम्भकाः नित्याश्चेति वैशेषिकाणामभ्युपगमः। तथा सति नित्यत्वं न सिध्यति। कुतः। यद्यद् रूपवत् तत् सर्वमनित्यमिति लोके दर्शनात्।

**१६. उभयथा च दोषात्।**

पृथिवीपरमाणवः गन्धरसरूपस्पर्शगुणाः। आपः रसरूपस्पर्शगुणाः। तेजसो रूपस्पर्शगुणौ। वायोस्तु स्पर्शगुण एव। तथा सति गुणानां उपचयः अपचयो वा कथं साध्यते। उपचयात् अणूनां मूर्त्युपचयः ततः अणुत्वहानिश्च। यदि गुणोपचयो न कल्प्येत सर्वेषामणूनामेकत्वात् सर्वपदार्थेषु सर्वगुणासिद्धिर्भविष्यति। उभयथाऽपि दोषः।

**१७. अपरिग्रहाच्चात्यन्तमनपेक्षा॥**

कैश्चिदपि मन्वादिभिः केनचिदंशेनापि वैशेषिकमतस्य अपरिग्रहात् तत् अत्यन्तं अनादरणीयम्। Cf. the phrase शिष्टापरिग्रह in 2.1.12.

( ४ ) समुदायाधिकरणम्। सू. १८—२७

**१८. समुदाय उभयहेतुकेऽपि तदप्राप्तिः।**

( सर्वास्तित्वबौद्धमतखण्डनम् ) भूतभौतिकादिबाह्ये चित्तचैत्ताद्यान्तरे एवं उभयहेतुके बौद्धानां समुदाये अभ्युपगम्यमानेऽपि न समुदाय-

सिद्धिः । समुदायिनामचेतनत्वात् । आत्मनः समुदायस्य च क्षणिकत्वात् ।

**१९. इतरेतरप्रत्ययत्वादिति चेन्न, उत्पत्तिमात्रनिमित्तत्वात् ।**

अविद्या, संस्कारः, विज्ञानं, नाम, रूपं, षडायतनं, स्पर्शः, वेदना, तृष्णा, उपादानं, भवः, जातिः, जरा, मरणं, शोकः, परिदेवना, दुःखं, दुर्मनस्ता – इत्यादि – इतरेतरहेतुकाः सौगते समये परिगृहीताः दृश्यन्ते। तथापि तेन प्रथमसंघातस्य उत्पत्तिर्न सिध्यति। इतरेतरोत्पत्तिः सिध्येत। न पुनः प्रथमसंघातोत्पत्तिः।

**२०. उत्तरोत्पादे च पूर्वनिरोधात् ।**

प्रतिक्षणं भिन्नं कार्यमिति बौद्धानां मतम् । तस्मिन् पक्षे उत्तरस्मिन् क्षणे उत्पद्यमाने पूर्वस्य निरोधः मरणं प्रसज्येत। अतः इतरेतरोत्पत्तिरपि न संगच्छते इत्यर्थः। निरोधः = विनाशः।

**२१. असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ।**

पूर्वक्षणः निरोधग्रस्तत्वादुत्तरक्षणस्य न हेतुरित्युक्तं पूर्वसूत्रे। असति एव हता प्रतिज्ञोपरोधः। कथम्। आलम्बनप्रत्ययः, समनन्तरप्रत्ययः, अधिपतिप्रत्ययः, आलोकश्च, इति चतुर्विधाः हेतवः। तान् प्रतीत्य चित्त-चैत्ताः उत्पद्यन्ते इति बौद्धानां प्रतिज्ञा। सा हीयते। अथ पूर्वक्षणः उत्तर-क्षणोत्पत्तिर्यावत् तावदवतिष्ठते इति चेत् यौगपद्यं तयोः ( हेतुफलयोः ) संपद्यते। तदपि बौद्धानां न संमतम्। अतः उभयथाऽपि दोषः।

**२२. प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ।**

निरोधो द्विधा। सन्तमिममसन्तं करोमीति धीः प्रतिसंख्या, तया निरोधः प्रतिसंख्यानिरोधः। तदन्यः अप्रतिसंख्यानिरोधः। बुद्धिपूर्वकः अबुद्धि-पूर्वकश्च। एवं द्वौ निरोधौ, [illegible] । एतत् त्रयं अवस्तु अभावमात्रं निरुपाख्यं इति बौद्धा मन्यन्ते न क्षणिकम्। तत्र निरोधद्वय-स्यापि अप्राप्तिः। कुतः। अविच्छेदात्। अविद्यादिसंताने अंतिमात् भावात् तदुत्तरभावस्योत्पत्तिः प्रसज्यते। न तु दृष्टा। अत एव अंतिमस्य न निरोधो

भवति। तथा अविद्यादिसंतानस्य न कदाचिदंतो विच्छेदो वा भविष्यति।

**२३. उभयथा च दोषात्।**

सम्यग्ज्ञानात् अविद्यादीनां प्रतिसंख्यानिरोधश्चेत् निर्हेतुकविनाश-प्रतिज्ञाहानिप्रसङ्गः। अथ स्वयमेव अप्रतिसंख्यानिरोध इति चेत् उप-देशानर्थक्यप्रसङ्गः। उभयथाऽपि दोषः।

**२४. आकाशे चाविशेषात्।**

आकाशेऽपि न अवस्तुत्वाभ्युपगमः संगच्छते।

**२५. अनुस्मृतेश्च।**

अतश्च न क्षणिकत्वम्। यतः योऽहं पूर्वमद्राक्षं स एवाहमद्य पश्यामीति अनुस्मृतिः।

**२६. नासतोऽदृष्टत्वात्।**

नष्टाद् बीजादङ्कुरोद्भवः इति न्यायेन कारणनाशात् कार्यमिति बौद्ध-सिद्धान्तः। सोऽप्यसमञ्जसः। कुतः। असतः सतः उत्पत्तिः न दृश्यते।

**२७. उदासीनानामपि चैवं सिद्धिः॥**

अन्यथा चेत् i. e. असतः सदुत्पत्तिश्चेत् अनुद्यमिनः कृषीवलस्य सस्यनिष्पत्तिः स्यात्।

( ५ ) अभावाधिकरणम। सू. २८–३२

**२८. नाभाव उपलब्धेः।**

( विज्ञानवादिबौद्धमतखण्डनम् ) बाह्यस्य जगतोऽभावो नोपपद्यते। कुतः। उपलब्धेः। तस्य प्रतीतिगोचरत्वात्।

**२९. वैधर्म्याच्च न स्वप्नादिवत्।**

स्वप्नस्य जाग्रत्प्रत्ययेन बाधः। तथा जाग्रत्प्रत्ययस्य न केनापि बाधः। अतः वैधर्म्यात् न साम्यं तेषाम्। अतो बाह्यं जगत् न मिथ्या इत्याचार्याः। In the comm. Shankara maintains that the external world is not मिथ्या (P.588 of the

आनन्दाश्रम edition of the ब्रह्मसूत्रशांकरभाष्य :– " नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्यांचिदप्यवस्थायां बाध्यते । ... ")

**३०. न भावोऽनुपलब्धेः ।**

बाह्यवस्तु अनपेक्ष्य ज्ञानस्य भावो न विद्यते तथोपलब्ध्यसंभवात् ।

**३१. क्षणिकत्वाच्च ।**

यदपि आलयविज्ञानं ( नाम ) वासनाश्रयत्वेन ( परि )कल्पितं तदपि क्षणिकत्वात् न वासनानामधिकरणं भवितुमर्हति ।

**३२. सर्वथानुपपत्तेश्च ॥**

( ६ ) एकस्मिन्नसंभवाधिकरणम् । सू. ३३–३६

**३३. नैकस्मिन्नसंभवात् ।**

( जैनमतखण्डनम् ) जैनास्तु " जीवः, अजीवः, आस्रवः, संवरः, निर्जरः, बन्धः, मोक्षः " इति सप्त पदार्थान् मन्यन्ते । तत्र जीवाजीवौ मुख्यौ । तथा पञ्चास्तिकायाः – " जीवास्तिकायः, पुद्गलास्तिकायः, धर्मा०, अधर्मा०, आकाशा० " । स्याद्वादसप्तभङ्गीनयश्च । तत्रोच्यते । 'स्यात्' ' न स्यात् ' इत्यादि एकस्मिन् न संभवति ।

**३४. एवं चात्माऽकार्त्स्न्यम् ।**

जैनास्तु " आत्मा शरीरपरिमाणः " इति मन्यन्ते । तन्न साधु । अकार्त्स्न्यात् । पुरुषे य आत्मा स हस्त्यादौ न संभवति न वा पुत्तिकादौ अतो न आत्मनः कार्त्स्न्यम् ।

**३५. न च पर्यायादप्यविरोधो विकारादिभ्यः ।**

ननु आत्मा पर्यायेण लघुः महान् च भविष्यति । न । कुतः । तस्य अविकार्यत्वात् ।

**३६. अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥**

जैनास्तु मोक्षावस्थाभाविनः जीवपरिमाणस्य नित्यत्वं मन्यन्ते । एवं । सति तत्पूर्वयोराद्यमध्यमावस्थयोरुभयोर्नित्यत्वं सिध्यति । अविशेषात् ।

( ७ ) पत्यधिकरणम्। सू. ३७–४१

**३७. पत्युरसामञ्जस्यात्।**

( अधिष्ठात्रीश्वरवादखण्डनम् ) एतन्मते हीनमध्यमोत्तमान् प्राणिनः सृजतः ईश्वरस्य असामञ्जस्यं प्रसज्येत। "न हि कश्चिददोषयुक्तः स्वार्थे परार्थे वा प्रवर्तते। स्वार्थप्रयुक्तः एव परार्थे प्रवर्तते।" तस्मात् दोषभाक् ईश्वरो भवेत्। प्राणिधर्माधर्मकृतं वैषम्यमिति चेत् न। तथा ( हि ) ऽपि ईश्वरस्य कर्तृत्वम्। See 2.1.34–35; see 1.4.23 and remarks thereon; Shankara discusses under this sūtra that प्रवृत्ति is always selfish ( स्वार्थपरा ).

**३८. संबंधानुपपत्तेश्च।**

न च प्रधानपुरुषाभ्यां ईश्वरस्य संबंधः उपपादयितुं शक्यः।

**३९. अधिष्ठानानुपपत्तेश्च।**

नापि शरीराद्यधिष्ठानं ईश्वरस्य कल्पयितुं शक्यम्।

**४०. करणवच्चेन्न, भोगादिभ्यः।**

चक्षुरादिकरणं यथा आत्मा अधितिष्ठति तद्वदिति चेत्। न। आत्मनो भोगादिकं दृश्यते, न ईश्वरस्य, इति भेदात्।

**४१. अन्तवत्त्वमसर्वज्ञता वा॥**

ईश्वरः प्रधानादिकं उपादानं इयत्तया जानाति वा न। नेत्युक्ते सर्वज्ञताहानिः। जानाति इत्युक्ते इयत्तापरिच्छिन्नानामन्तवत्त्वं, ततः ईश्वरस्यापि। ईश्वरस्य कर्तृत्वे विषयाभावप्रसङ्गः।

( ८ ) उत्पत्त्यसंभवाधिकरणम्। सू. ४२–४५

**४२. उत्पत्त्यसंभवात्।**

( भागवतमतखण्डनम् ) वासुदेवात् ( परमात्मनः ) संकर्षणः ( जीवः ), संकर्षणात् प्रद्युम्नः ( मनः ), प्रद्युम्नात् अनिरुद्धः ( अहंकारः ) इति न उत्पत्तिः शक्या। अनित्यत्वादिदोषप्रसङ्गात्।

**४३. न च कर्तुः करणम्।**

लोके कर्तुः देवदत्तादेः करणं परश्वादि उत्पद्यमानं न दृश्यते । कथं जीवात्मकात् संकर्षणात् प्रद्युम्नस्य ( मनोमयस्य ) उत्पत्तिः । Cf. " तस्मात् प्रसूतो यः कर्ता करणं कार्यमेव च ॥ " ( मभा १२ ३३९.३८ ) CE 12.326.37 ab ( " तस्मात्प्रसूतो यः कर्ता कार्यं कारणमेव च । " ).

**४४. विज्ञानादिभावे वा तदप्रतिषेधः ।**

चत्वारोऽपि विज्ञानवन्तः तुल्यधर्माणः इति चेत् । तत्राप्युत्पत्त्यसंभवः । तुल्यत्वे अन्यस्योत्पत्तौ मानाभावात् कारणाभावाच्च ।

**४५. विप्रतिषेधाच्च ॥**

वेदविरुद्धत्वात्, वेदनिन्दाश्रवणाच्च ।

N. B. – Rāmānuja takes sūtras 42–45 as supporting the पाञ्चरात्र doctrine! and interprets sūtra 44 विज्ञानादिभावे वा तदप्रतिषेधः to mean " If संकर्षण etc. are considered to be तुल्यज्ञानवन्तः, there is no प्रतिषेध. " But then what of sūtra 45 which says विप्रतिषेधाच्च? It is, to say the least, unnatural that the पाद should close with the approval of any doctrine, when the whole पाद is specially devoted to refuting the other theories. Rāmānuja's view is, therefore, clearly untenable; and is evidently the outcome of his sectarian views.

॥ इति द्वितीयाध्यायस्य द्वितीयपादः ॥

# ॥ अथ द्वितीयाध्यायस्य तृतीयपादः ॥

( १ ) वियदधिकरणम्। सू. १–७

**१. न वियदश्रुतेः।**

वियदुत्पत्तिः न श्रूयते, अतो ब्रह्मणस्तस्य उत्पत्तिः न ग्राह्या। इति पूर्वपक्षः।

**२. अस्ति तु।**

यद्यपि छान्दोग्ये उत्पत्तिः न श्रूयते तथापि तैत्तिरीये श्रूयते यथा " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " ( तै २.१ ).

**३. गौण्यसंभवात्।**

Cf. सूत्र 2.4.2.

तैत्तिरीयश्रुतिस्तु गौणी भवितुमर्हति – इति पूर्वपक्षः। कथम्। आकाशस्य पूर्वोत्तरकालीनसंबन्धस्यासंभवात्।

**४. शब्दाच्च।**

तथा च श्रुत्यन्तरमपि – " आकाशशरीरं ब्रह्म " ( तै १.६ ) इति आकाशस्य ब्रह्मणा सहाजत्वं कथयति। " आकाश आत्मा " इति च ( तै १.७ ).

**५. स्याच्चैकस्य ब्रह्मशब्दवत्।**

एवं सति " संभूतः " – शब्दस्य प्रयोगः तैत्तिरीये गौणः। " तपो ब्रह्म " ( तै ३ २ ) इत्यादिषु ब्रह्मशब्दवत्। एकस्मिन् वाक्येऽपि एकदा मुख्यः एकदा गौणः। यथा " तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्म। "

**६. प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः।**

" येनाश्रुतं श्रुतं भवति ... " ( छां ६ १.३ ), " आत्मनि ... दृष्टे श्रुते ... इदं सर्वं विदितम् " इत्येवंजातीया वेदान्तस्य प्रतिज्ञा कृत्स्नस्य वस्तुजातस्य ब्रह्मणः व्यतिरिक्तत्वं चेत् हीयेत। तस्मात् प्रतिज्ञायाः

अहानिः अनुपरोधः आकाशस्य उत्पत्तिमत्त्वे एव सिध्यति । नान्यथा । मृदादिदृष्टान्तैः शब्देभ्यः श्रुत्यन्तरेभ्यः अपि प्रतिज्ञायाः सिद्धिरेव सूच्यते ।

**७. यावद्विकारं तु विभागो लोकवत् ॥**

यावत् किंचित् विकारजातं तावानेव लोके विभागो दृश्यते । यथा आकाशः पृथिवी आपः etc. न तु अविकृतं किंचित् कुतश्चित् विभज्यते । तस्मात् आकाशस्य उत्पन्नत्वं सिध्यति ।

( २ ) मातरिश्वाधिकरणम् । सू. ८

**८. एतेन मातरिश्वा व्याख्यातः ॥**

( ३ ) असभवाधिकरणम् । सू. ९

**९. असंभवस्तु सतोऽनुपपत्तेः ॥**

"सतः" ब्रह्मणः उत्पत्तेरसंभवः । अनुपपत्तेः । सन्मात्रं तु तत् । न कारणान्तरमपेक्षते ।

( ४ )तेजोधिकरणम् । सू. १०

**१०. तेजोऽतस्तथाह्याह ॥**

"सदेव" ( छां ६.२.१ ) इत्युपक्रम्य "तत्तेजोऽसृजत" ( छां ६.२ ३ ) अत्र यद्यपि 'तेजः'सृष्टिः उदाहृता तथापि क्रमस्याविवक्षायां आकाश एव प्रथमः । अन्यत्र तथा स्पष्टं श्रूयमाणत्वात् ।

( ५ ) अबधिकरणम् । सू. ११

**११. आपः ॥**

"अतस्तथाह्याहे"ति अनुवर्तते । "तदपोऽसृजत" इत्यादि ( छां ६.२.३ ).

( ६ ) पृथिव्यधिकाराधिकरणम् । सू. १२

**१२. पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥**

" ता अन्नमसृजन्त " इत्यत्र ( छां ६.२.४ ) अन्नशब्देन "पृथिवी" ग्राह्या । कस्मात् अधिकारात् – क्रमात्, प्रकरणात् क्रमप्राप्तत्वात् । रूपात् – अन्नस्य कृष्णं रूपं तत्राम्नातं, यथा " यत्कृष्णं तदन्नस्य " ( छां ६.४.१ )

तच्च रूपं पृथिव्या एव संभवति। शब्दान्तरात् च – यथा "अद्भ्यः पृथिवी" इति ( तै २.१ ).

( ७ ) तदभिध्यानाधिकरणम्। सू. १३

**१३. तदभिध्यानादेव तु तल्लिंगात्सः ॥**

( स एव परमेश्वरः तेन तेन आत्मनाऽवतिष्ठमानः अभिध्यायंस्तं तं विकारं सृजति इत्यर्थः भाष्ये ) येयं वियदादीनामुत्पत्तिः सा किमेकस्मादचेतनादन्यस्येति प्राप्ते उच्यते। न। स एव परमेश्वरः तेन तेनात्मना अवतिष्ठमानः एकस्मादन्यत् सृजति। कुतः। लिंगात्। यथा "यः पृथिव्यां तिष्ठन् ... यं पृथिवी न वेद" ( बृ ३.७ ३ ); "तदात्मानं स्वयमकुरुत" ( तै २.७ ).

( ८ ) विपर्ययाधिकरणम्। सू. १४

**१४. विपर्ययेण तु क्रमोऽत उपपद्यते च ॥**

प्रलये तु उक्तक्रमविपर्ययेण संहारः।

( ९ ) अन्तराविज्ञानाधिकरणम्। सू. १५

**१५. अंतरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात् ॥**

विज्ञानमनसी बुद्धिमनसी अंतरा क्रमस्यान्तराले संग्राह्ये। कस्मात्। "एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥" ( मुं २.१.३ ) इति लिंगादिति चेत्। न। अविशेषात्। पृथिव्यादिभूतांतरेषु एव मनआदीनां संग्राह्यत्वात् न तेषां पृथक्क्रमः वेदितव्यः।

( १० ) चराचरव्यपाश्रयाधिकरणम्। सू. १६

**१६. चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥**

पूर्वसूत्रैः तत्पदार्थसिद्ध्यै भूतादिप्रभवश्रुतिविरोधोऽपास्तः। अधुना त्वंपदा ( sic ) ( सिद्ध्यै ? as above ) जीवोत्पत्तिविरोधो निरस्यते। "देवदत्तो जातः मृतः" इत्यादिचराचराश्रयः जीवस्य व्यपदेशो निर्देशः

भाक्तः गौणः। तद्भावभावित्वात् – चराचरशरीरप्रादुर्भावतिरोभावयोः जन्म-मरणशब्दौ भवतः। न जीवस्य। अतः न जीवस्य उत्पत्तिप्रलयौ।

( ११ ) आत्माधिकरणम्। सू. १७

**१७. नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः॥**

न आत्मा उत्पद्यते। उत्पत्तेरश्रूयमाणत्वात्। ताभ्यः श्रुतिभ्यस्तस्य नित्यत्वश्रवणाच्च। श्रुतिस्तु "न जीवो म्रियते" ( छां ६.११.३ ), "अजो नित्यः शाश्वतोऽयं पुराणः" ( कठ २.१८ ), "आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" इत्याद्या।

R. interprets this Sūtra to mean that the soul tho' not born is not identical with ब्रह्म but only a प्रकार of it; but so are the elements & R. tries to distinguish between the two on the ground that elements, when they are said to be created, obtain expanse ( विकास ) while the soul does not!!

( १२ ) ज्ञाधिकरणम्। सू. १८

**१८. ज्ञोऽत एव॥**

अत एव आत्मा "ज्ञः" ज्ञानमयः उच्यते। "विज्ञानमानंदं ब्रह्म" ( बृ ३.९.२८ ).

R. takes ज्ञ to mean ज्ञातृ. But where is the difference if eventually all कर्तृत्व is to be traced to परात्? See Sutra 41 infra.

( १३ ) उत्क्रान्तिगत्यधिकरणम्। सू. १९–३२

**१९. उत्क्रांतिगत्यागतीनाम्।**

उत्क्रांतिः गतिः आगतिश्च। जीवसंबंधेन श्रूयमाणत्वात् जीवः परिच्छिन्नः अणुपरिमाण इति प्राप्तम्। इति पूर्वपक्षः। उत्क्रांतिः "स यदाऽ-

स्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति " ( कौ ३.४ )। गतिः " ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति " ( कौ १.२ )। आगतिश्च " तस्माल्लोकात् पुनरैति अस्मै लोकाय कर्मणे " ( बृ ४.४.६ )।

**२०. स्वात्मना चोत्तरयोः।**

उत्क्रांतिः क्वचिदचलतोऽपि संभवति ग्रामस्वाम्यनिवृत्तिवत्। गत्यागती नाचलस्य संभवतः। 'स्वात्मना' हि तयोः संबंधो भवति। गम्धातोः कर्तृस्थक्रियात्वात्। ते च अमध्यमपरिमाणस्य अणोः संभवतः। न महापरिमाणस्य न मध्यमस्य।

**२१. नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्।**

नाणुरात्मा। अणुभिन्नपरिमाणश्रवणात्। इति चेन्न। श्रुतिस्तु " स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु " ( बृ ४.४.२२ ), " आकाशवत्त सर्वगतश्च नित्यः " [ Quotation untraced ], " सत्यं ज्ञानमनन्तं ब्रह्म " ( तै २.१ ) इत्येवंजातीयका। एतानि श्रुतिवाक्यानि इतरस्य परस्य आत्मनः प्रक्रियायां श्रूयन्ते। तस्मात् अणुत्वं न बाध्यते।

**२२. स्वशब्दोन्मानाभ्यां च।**

" एषोऽणुरात्मा चेतसा वेदितव्यः " ( मुं ३.१.९ ) इति साक्षादणुशब्दश्रवणम्। उन्मानं च श्वेताश्वतरश्रुतौ " वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः " ( श्वे ५.९ )। उन्मानान्तरं च यथा " आराग्रमात्रो ह्यवरोऽपि दृष्टः " इति ( श्वे ५.८ )।

**२३. अविरोधश्चन्दनवत्।**

यथा हि चंदनबिंदुः शरीरैकदेशस्थितोऽपि सकलं शरीरमानंदयति तद्वत् अणुपरिमाणः आत्माऽपि सकलं शरीरं व्याप्नोति। अतः अविरोधः।

**२४. अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि।**

ननु चंदनबिंदोः एकदेशावस्थानं दृश्यते अतः सर्वशरीराह्लादकत्वं

तस्य युज्यते । न पुनः जीवस्य एकदेशस्थायित्वं दृश्यते । इति चेन्न । तस्य हृदि अवस्थानस्य श्रूयमाणत्वात् । यथा " हृदि ह्येष आत्मा " ( प्र ३.६ ), " स वा एष आत्मा हृदि " ( छां ८.३ ३ ).

**२५. गुणाद्वा लोकवत् ।**

लोके यथा प्रदीपस्य प्रभा ( गुणः ) प्रदीपस्य एकदेशास्थितत्वेऽपि सर्वगृहव्यापिनी दृश्यते तद्वत् चैतन्यगुणस्य जीवस्यापि चेष्टितं ज्ञातव्यम् ।

**२६. व्यतिरेको गन्धवत् ।**

गुणः गुणिव्यतिरेकेण अन्यत्र न वर्तते इति चेत् गंधवत् द्रव्याणां गंधो यथा सर्वत्र प्रसरति स दृष्टान्तो ग्राह्यः । गंधश्च द्रव्यव्यतिरेकेणापि वर्तते इति प्राचीनानां सिद्धान्तः ।

**२७. तथा च दर्शयति ।**

हृदयायतनत्वं अणुपरिमाणत्वं च जीवस्याभिधाय तस्यैव " आ लोमभ्यः आ नखाग्रेभ्यः " ( छां ८.८.१ ) व्याप्तिः श्रूयते । ( छां text has नखेभ्यः ).

**२८. पृथगुपदेशात् ।**

" प्रज्ञया शरीरं समारुह्य " ( कौ ३.६ ), " तदेषां प्राणानां विज्ञानेन विज्ञानमादाय " ( बृ २.१.१७ ) इति च शारीरात् पृथग् विज्ञानस्योपदेशात् शरीरभिन्नः अणुरात्मा इति सिध्यति । आचार्याणां मते एतावान् पूर्वपक्ष एव ।

**२९. तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ।**

सिद्धान्तयति नाणुरात्मेति । अणुशब्देनोपदेशस्तु तद्गुणाः बुद्धिगुणाः ते सारः प्रधानं यस्य तस्य भावः "तद्गुणसारत्वं", तस्मात् तद्व्यपदेशः प्राज्ञवत् साधुः । " बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः ' ( श्वे ५.८ ) इति श्रुतेः । तस्मात महान् विभुश्चात्मा इति सिद्धम् । " प्रज्ञया शरीरं समारुह्ये "ति भेदव्यपदेशः एवमेव बुद्धिगुणत्वाद् व्याख्येयः ।

R. considers sūtra 19 as siddhānta and not sūtra 29. He thinks that तद्गुण means विज्ञान, which is attributed to the soul, because its nature is intelligence. According to R., the soul is अणु and not विभु. So he takes sūtra 19 as siddhānta. But what of the simile प्राज्ञवत् ? Does it not shew that the case is similar to that of वैश्वानर or परमात्मा in दहराधिकरण (1.3.14–21) or शब्दादेव प्रमितः (1.3.24) or वैश्वानर° (1.2.24–32)?

**३०. यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ।**

बुद्धिसंयोगस्य यावदात्मभावित्वात् न दोषः। यावद् बुद्धिसंयोगस्तावत् संसारी जीवः। परमार्थतस्तु स ब्रह्मैव। सम्यग्दर्शनात् मुक्तिः। न पूर्वावस्थायाम्।

**३१. पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ।**

यद्यपि बुद्धिसंयोगो नित्यः तथापि योग्यकाले एव सः अभिव्यक्ततां प्राप्नोति। पुंस्त्वादि यथा सदपि यौवने एव प्रादुर्भवति तद्वत्। अतः सुषुप्तिप्रलयकालयोः न बुद्धिसंबंधस्याभिव्यक्तिः। R. thinks that it is the ज्ञातृत्व that is discussed in sūtras 30 & 31 as well as in the next sūtra 32.

**३२. नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथा ॥**

अन्यथा काले एव अभिव्यक्तिरिति नियमो न कल्पेत तदा नित्यमेव जीवेन बुद्धिसंयोगस्य सत्त्वात् विषयाणां नित्योपलब्धिः प्रसज्येत। नित्यानुपलब्धिर्वा। अथवा अन्यतरस्य आत्मनः बुद्धेर्वा शक्तिनियमः शक्तिप्रतिबंधः प्रसज्येत। न चैवं दृश्यते। अतः योग्यकालप्रादुर्भाव एव ग्राह्यः

( १४ ) कर्त्रधिकरणम। सू. ३३–३९

**३३. कर्ता शास्त्रार्थवत्त्वात् ।**

जीवः कर्ता। अन्यथा विधिनिषेधपरशास्त्रस्य अनर्थवत्त्वं प्रसज्येत।

**३४. विहारोपदेशात्।**

"स ईयतेऽमृतो यत्रकामम्" (बृ ४.३.१२), "स्वे शरीरे यथाकामं परिवर्तते" (बृ २ १.१८) इति विहारश्रवणादपि कर्तैव आत्मा।

**३५. उपादानात्।**

"तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" (बृ २.१.१७), "प्राणान् गृहीत्वा" (बृ २.१.१८) इति जीवेन प्राणानां उपादानं ग्रहणं श्रूयते।

**३६. व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः।**

"विज्ञानं यज्ञं तनुते" (तै २.५) इत्यत्र विज्ञानशब्देन जीव एव कर्ता उपदिष्टः श्रूयते। यदि बुद्धिः विज्ञानेन शब्देनापेक्षिता स्यात् तद "विज्ञानेन" इति तृतीयान्तः निर्देशविपर्ययः अभविष्यत्। न तथा। अत एव कर्ता जीव एव।

**३७. उपलब्धिवदनियमः।**

बुद्धिभिन्नः जीवः यदि स्वयं कर्ता तर्हि स कथं इष्टं अनिष्टं च आत्मनः संपादयाति। यथा इन्द्रियाणि चक्षुरादीनि प्रियं आप्रियं आनियमेन पश्यंति तद्वत् जीवस्य कृत्यं अनियमेन इष्टं अनिष्टं च भवति।

**३८. शक्तिविपर्ययात्।**

यदि बुद्धिः कर्त्री स्यात् तदा करणात्मिकाया बुद्धेः कर्तृत्वप्राप्तौ शक्तेः विपर्ययः आपद्येत। करणं कर्तृ भविष्याति। अतो जीवस्यैव कर्तृत्वम्।

**३९. समाध्यभावाच्च॥**

"आत्मा वा अरे द्रष्टव्यः ..." (बृ २.४.५) इत्यादिः आत्मविषयः यः समाधिः श्रूयते स अन्यथाबुद्धिकर्तृत्वग्रहणे नोपपद्येत।

(१५) तक्षाधिकरणम्। सू. ४०

**४०. यथा च तक्षोभयथा॥**

यथा तक्षा उभयथा कदाचित् काले कर्ता कदाचित् स्वस्थः दृश्यते तथा जीवोऽपि कर्तृत्वशक्तियुक्तः सन्नपि न सर्वदैव कुर्वन् दृश्यते। R. does not regard this to be a separate adhikarana.

( १६ ) परायत्ताधिकरणम्। सू. ४१–४२

**४१. परात्तु तच्छ्रुतेः।**

यज्जीवस्य कर्तृत्वं उपन्यस्तं तत् परात् परात्मनः एव संभूयते। " एष ह्येव साधु कर्म कारयति तं यमेभ्यः लोकेभ्यः उन्निनीषते " ( कौ ३.८) इत्यादिश्रुतेः। ( कौ text reads एनं after ह्येव ); see 3.2.38 ( फलमत उपपत्तेः ) where फल of कर्म by जीव is also attributed to परमात्मा.

**४२. कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः॥**

तथापि ईश्वरकर्तृत्वं जीवस्य कृतप्रयत्नापेक्षम्। न स्वैरं वैषम्य-नैर्घृण्यप्रसंगात्। विधिनिषेधशास्त्रस्य वैयर्थ्याच्च।

( १७ ) अंशाधिकरणम्। सू. ४३–५३

**४३. अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्व-मधीयत एके।**

जीवः परमात्मनोंऽशः अस्ति। कुतः। नानाश्रुतिषु तथा व्यपदेशात्। " सोऽन्वेष्टव्यः ... " ( छां ८.७.१ ) इत्यादौ भेदेन व्यपदेशात्। तथा एके शाखिनः आथर्वणिका ब्रह्मसूक्ते " ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः " इत्यामनन्ति। ( In the recently discovered & published texts of the पैप्पलादशाखा of the अथर्ववेद we have :- " ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत। " 8.9.11 ) Can नानाव्यपदेश mean that the soul is described as नाना 'many'? The word नाना shews the sūtra intended to explain the sāṅkhya objection that 'Souls' are many. Yes, says Bādarāyaṇa, but not many en-

tities but parts of one whole. Shankara's explanation अंश इव अंशः is a good one.

**४४. मंत्रवर्णाच्च।**

Cf. "पादोऽस्य विश्वा भूतानि" (ऋ 10.90.3); (but quoted in शांभा from the छां 3.12.6 as "पादोऽस्य सर्वा भूतानि").

**४५. अपि च स्मर्यते।**

Cf. "ममैवांशो जीवलोके" (गी १५.७).

**४६. प्रकाशादिवन्नैवं परः।**

एवं संसारित्वावस्थापन्नत्वं न परस्यात्मनः संभवति। प्रकाशादिवत्। यथा प्रकाशः वियद्व्याप्यावतिष्ठमानः अंगुल्याद्युपाधिसंबंधात्तेषु ऋजुवक्रादिभावं भजति तद्वत् जीवो भवति न परः। Cf. sūtra 3.2.15 "प्रकाशवच्चावैयर्थ्यात्".

**४७. स्मरन्ति च।**

Cf. महाभारत– १२, ३५१, १४–१६; i.e. 12.339.=15-16 of the Critical Edition of महाभारत of B.O. R. I.

"तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा॥
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते।
स सप्तदशकेनापि राशिना युज्यते पुनः॥"

**४८. अनुज्ञापरिहारौ देहसंबंधाज्ज्योतिरादिवत्।**

"ऋतौ भार्यामुपेया"दित्यनुज्ञा। "गुर्वंगनां नोपगच्छेत्" इति परिहारः। आत्मनः एकत्वेऽपि अनुज्ञापरिहारौ देहसंबंधात् स्याताम्। यथा ज्योतिषः एकत्वेऽपि (अग्निः) क्रव्यात् परिह्रियते नेतरः। Cf. सूत्र 3.2.6. ("देहयोगाद्वा सोऽपि").

**४९. असंततेश्चाव्यतिकरः।**

एवं सति जीवदेहसंबंधस्य असंततेः अनित्यत्वात् (उपाधितंत्रत्वात्) कर्मव्यतिकरः फलव्यतिकरो वा न भवति। Also, all souls are one; yet no confusion of actions takes place as adjuncts are not the same.

**५०. आभास एव च।**

आभास एव चैष जीवः परस्याऽऽत्मनः जलसूर्यकादिवत् प्रतिपत्तव्यः। एकस्मिन् जलसूर्यके कंपमाने जलसूर्यकांतरं न कंपते तद्वत् न सर्वेषामात्मनां कर्मव्यतिकरः। R. records another reading आभासाः & interprets it = हेत्वाभासाः। ( श्रीभाष्य " आभासा एवेति वा पाठः। तथा सति हेतव आभासाः।").

**५१. अदृष्टाऽनियमात्।**

सांख्यानां मते बहवः पुरुषाः। तथा च काणादाः। एवं जीवबहुत्वे सति कर्मफलयोः अव्यतिरेकः ( confusion ) कथं निवार्येत। अदृष्टत्वात् इति चेन्न। अदृष्टं एकेनैवात्मना संबध्येत नान्येन इति नियमकारणाभावात्। अदृष्टं च धर्माधर्मरूपं मनोवाक्कायैः संपत्स्यते। यदि सर्वे आत्मानः सर्वगता विभवश्च तेषामदृष्टेन सान्निध्याविशेषान्नादृष्टस्य नियामकत्वं संभवति।

**५२. अभिसन्ध्यादिष्वपि चैवम्।**

बाढम्। अदृष्टं यदि न नियामकं तर्हि " अहं इदं ... करवाणि " इत्यादिरूपाः अभिसन्ध्यादयः प्रत्यात्मं प्रवर्तमानाः नियामकाः स्युः। न। सर्वात्मनः सर्वगतत्वान्नियमे कारणाभावात्। तस्मात् पूर्ववत् अव्यवस्थैव प्राप्नोति।

**५३. प्रदेशादिति चेन्नान्तर्भावात्॥**

विभुत्वेऽपि आत्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरप्रदेशमात्रो भवितुमर्हति इति चेन्न। अंतर्भावात्। विभुत्वाविशेषात् सर्वे आत्मानः सर्वेषु शरीरेषु अंतर्भवन्ति।

**॥ इति द्वितीयाध्यायस्य तृतीयपादः॥**

## ॥ अथ द्वितीयाध्यायस्य चतुर्थपादः ॥

( १ ) प्राणोत्पत्त्यधिकरणम्। सू. १–४

**१. तथा प्राणाः।**

प्राणाः अपि तथैव वियदादिवत् परमात्मनः उत्पन्नाः "एतस्माज्जायते प्राणः" ( मुं २.१.३ ), "स प्राणमसृजत। प्राणाच्छ्रद्धां ..." ( प्र ६.४ ); cf. sūtra 17 infra which identifies प्राणाs with इंद्रियाs.

**२. गौण्यसम्भवात्।**

छांदोग्ये प्राणानामुत्पत्तिर्नाम्नायते। परं तेन उत्पत्तिश्रुतिर्गौणी भवितुं नार्हति। गौण्याः असंभवात् इति सामासिकं पदम्। सूत्रस्य सिद्धांतविषयत्वात्। २.३.३ सूत्रे तु गौणी असंभवादिति पदच्छेदः तत्सूत्रस्य पूर्वपक्षगतत्वात् कृतः।

**३. तत्प्राक्श्रुतेश्च।**

"एतस्माज्जायते प्राणः" ( मुं २.१.३ ) इत्यत्र "जायते" इति यत् पदं तत् पूर्वस्मिन् वाक्ये आकाशादिषु मुख्यम्। अतः अत्रापि मुख्यं एव न गौणम् इति सिद्धान्तः।

**४. तत्पूर्वकत्वाद्वाचः॥**

यद्यपि "तत्तेजोऽसृजत" इत्यादि छांदोग्यवाक्ये (६.२.३) प्राणानामुत्पत्तिर्न पठ्यते तथापि तेजोबन्नानां या उत्पत्तिः श्रुता तस्या अनन्तरं तेभ्य एव वाक्प्राणमनसां श्रूयमाणत्वात् सिद्धमेव प्राणानां ब्रह्मणः प्रभवत्वम्। तथा च तेजोबन्नप्रकरणे श्रूयते "अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्" ( छां ६.५.४ ).

( २ ) सप्तगत्यधिकरणम्। सू. ५–६

**५. सप्त गतेर्विशेषितत्वाच्च।**

" सप्त प्राणाः प्रभवन्ति तस्मात् " ( मुं २.१.८ ), तथा " सप्त वै शीर्षण्याः प्राणाः " ( तैसं ५.३.२.५ ) इति विशेषितत्वात् सप्त एव प्राणाः इति पूर्वपक्षः।

**६. हस्तादयस्तु स्थितेऽतो नैवम् ॥**

" हस्तौ वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतः। हस्ताभ्यां हि कर्म करोति। " ( बृ ३.२.८ ).

( ३ ) प्राणाणुत्वाधिकरणम्। सू. ७

**७. अणवश्च ॥**

अणव एव सूक्ष्माः प्राणाः परिच्छिन्नाश्च।

( ४ ) प्राणश्रैष्ठ्याधिकरणम्। सू. ८

**८. श्रेष्ठश्च ॥**

मुख्यश्च प्राणः इतरप्राणवत् ब्रह्मविकारः। " एतस्माज्जायते प्राणः मनः सर्वेंद्रियाणि च " ( मुं २.१.३ ) इति श्रेष्ठस्य पृथग्दर्शनात्। तथाहि " प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च " ( छां ५.१.१ ).

( ५ ) वायुक्रियाधिकरणम्। सू. ९–१२

**९. न वायुक्रिये पृथगुपदेशात्।**

मुख्यः प्राणो न वायुः नापि करणव्यापारः ( क्रिया वा )। " एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च खं वायुः " इत्यादिना वायोः करणानां च पृथगुपदेशात्। Prāṇa is not merely a name for the collective action of all the इंद्रियाs.

**१०. चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः।**

मुख्योऽपि प्राणः चक्षुरादिवत् जीवस्य करणमिव। न स्वतंत्रः। कथम्। तैः चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादेषु ( छां ५.१.६ ).

**११. अकरणत्वाच्च न दोषस्तथाहि दर्शयति।**

यद्यपि प्राणः ( श्रेष्ठः ) न करणकार्यं करोति तथापि न दोषः।

" यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठः " ( छां ५.१.७ ) इति दर्शनात्। प्राणः ( श्रेष्ठः ) न करणं तथापि चक्षुरादि-करणवत् न स्वतंत्रः। किंतु जीवोपकारकः। जीवस्तु अनुत्पन्नः अत एव स्वतंत्रः इति।

**१२. पंचवृत्तिर्मनोवद्व्यपदिश्यते ॥**

" प्राणोऽपानो व्यान उदानः समानः " ( बृ १.५.३ ); यथा मनसः " कामः संकल्पः " इत्याद्या वृत्तयः ( बृ १.५.३ ).

( ६ ) श्रेष्ठाणुत्वाधिकरणम्। सू. १३

**१३. अणुश्च ॥**

श्रेष्ठप्राणोऽपि अणुरूपः इत्यर्थः।

( ७ ) ज्योतिराद्यधिकरणम्। सू. १४–१६

**१४. ज्योतिराद्याधिष्ठानं तु तदामननात्।**

सर्वे प्राणाः ज्योतिरादिभिः अग्न्यादिभिः देवताभिरधिष्ठीयन्ते। तथा श्रुतत्वात्। " अग्निर्वाक् भूत्वा मुखं प्राविशत् " ( ऐ १.२.४ ), " वागेव ... ज्योतिषा भाति ... " ( छां ३.१८.३ ); cf. " वागध्यात्म-मिति प्राहुः ... वह्निस्तत्राधिदैवतम् " ( मभा १२.३१३५ ) [ अ. ३०१ of the Critical Edition of the Mahābhārata by BORI, Poona ].

**१५. प्राणवता शब्दात्।**

यद्यपि देवताधिष्ठिताः सर्वे प्राणास्तथापि तेषां शरीराध्यक्षेण जीवेनैव संबंधः श्रूयते। " ( अथ ) यो वेदेदं जिघ्राणीति स आत्मा गंधाय घ्राणम् " ( छां ८.१२.४ ).

**१६. तस्य च नित्यत्वात् ॥**

तस्य जीवस्य च नित्यत्वात् अध्यक्षत्वं युज्यते।

( ८ ) इन्द्रियाधिकणरम्। सू. १७–१९

**१७. त इंद्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्।**

श्रेष्ठात् प्राणादन्ये प्राणाः इंद्रियाणि। "एतस्माज्जायते प्राणः मनः सर्वेंद्रियाणि च" ( मुं २.१.३ ) इति पृथगुपदेशात्।

**१८. भेदश्रुतेः।**

भेदेन वागादिभ्यः प्राणः श्रूयते। "ते ह वाचमूचुः ..." ( बृ १.३.२ ), "मनो वाचं प्राणं तान्यात्मनेऽकुरुत" ( बृ १.५.३ ).

**१९. वैलक्षण्याच्च॥**

सुषुप्तेषु वागादिषु प्राणो जागर्ति इति वैलक्षण्यं अस्य इतरेषां च भवति।

( ९ ) संज्ञामूर्तिक्लृप्त्यधिकरणम्। सू. २०–२२

**२०. संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्।**

"सेयं देवतैक्षत हंताहमिमास्तिस्रो देवताः ( तेजोबन्नानि ) अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि इति। ( तासां त्रिवृतं त्रिवृतं एकैकां करवाणि इति ) ( छां ६.३.२ [ ३ ] )" इत्यत्र संज्ञामूर्तिक्लृप्तिः = नामरूपव्याकरणं यदुक्तं तत् त्रिवृत्कुर्वतः परमात्मनः एककार्यं न जीवस्य नापि प्राणानाम्।

**२१. मांसादि भौमं यथाशब्दमितरयोश्च।**

"यदग्ने रोहितं रूपं तेजसः तद्रूपम्। यच्छुक्लं तदपाम्। यत्कृष्णं तदन्नस्येति" ( छां ६.४.१ ) रूपत्रयविभागं उक्त्वा भूमेः त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानायाः मांसादिकार्यं श्रूयते। "अन्नमशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तत्पुरीषम्। यो मध्यमः तन्मांसम्। योऽणिष्ठः तन्मनः।" ( छां ६.५.१ ); तत् कार्यं यथाशब्दं निष्पद्यते।

**२२. वैशेष्यात्तु तद्वादस्तद्वादः॥**

यदि यथाशब्दं निष्पद्यते तर्हि किमर्थं श्रुत्या पुनः कथितं इति चेत्। वैशेष्यात्। वैशेष्यं भूयस्त्वम्। सत्यपि त्रिवृत्करणे कस्यचित् कुत्रापि भूयस्त्वकथनं एव प्रयोजनं इत्यर्थः।

Summary :-

**अध्यायस्य द्वितीयस्य चाद्यपादे** तु युक्तितः।
सांख्यस्मृत्यवकाशः योगस्यापि निराकृतः॥ १॥

विलक्षणत्वं चासत्त्वात् अपीतौ कार्यदूषणात्।
ब्रह्मणश्च निराकृत्य भोक्त्रापत्तिः समर्थिता॥ २॥

अनन्यत्वं च तादात्म्याज्जगतो ब्रह्मणस्तथा।
प्रागुत्पत्तेः कार्यसत्त्वात् प्रदर्श्य तदनन्तरम्॥ ३॥

हिताऽकरणोपसंहाराऽभावदोषौ निराकृतौ।
कृत्स्नप्रसक्तिश्च ततः सर्वोपेता च ब्रह्मणः॥ ४॥

अप्रयोजनवत्त्वं तु लीलासृष्ट्याः प्रदर्श्य च।
नात्र वैषम्यनर्घृण्ये इति चान्ते निदर्शितम्॥ ५॥

**पादे द्वितीये** चात्र पुनः सांख्यशास्त्रानुरोधतः।
रचनायाः प्रवृत्तेश्च नोपपत्तिः पयोंबुवत्॥ ६॥

सिध्यतीति प्रदर्श्याणुवादोऽपि च निराकृतः।
बौद्धानां समुदायस्तु बाह्याभ्यंतरसंज्ञितः॥ ७॥

क्षणिकश्च ततो दूष्य मतं विज्ञानवादिनाम्।
नाभाव उपलब्धेर्हि बाह्यस्येति च खंडितम्॥ ८॥

जैनानां च तथैकस्मिन् प्रक्रियायामसंभवम्।
दर्शयित्वा ततःपश्चादधिष्ठाता हि केवलम्॥ ९॥

समंजसत्वात् पत्युश्च नेश्वरश्चेति दर्शितम्।
वासुदेवात्ततोऽन्येषां उत्पत्तेश्चाप्यसंभवम्॥ १०॥
प्रदर्श्य पांचरात्राणां मतमंते निराकृतम्।
**द्वितीयस्य तृतीये** तु क्रमेण वियदादिनाम्॥ ११॥

ब्रह्माभिध्यानादुत्पत्तिं लयं चैव विपर्ययात् ।
नांतरा ज्ञानमनसी श्रुतीनामविरोधतः ॥ १२ ॥

प्रोच्य मध्ये ह्यनुत्पत्तिः ब्रह्मणश्च प्रदर्शिता ।
ततो जीवस्य भाक्तो हि चराचरव्यपाश्रयः ॥ १३ ॥

नित्यत्वं च तथा ज्ञत्वं प्रदर्श्य हि ततः परम् ।
अणुत्वव्यपदेशो हि तस्य तद्‌गुणसारतः ॥ १४ ॥

कर्तृत्वं चास्य तु परात् ब्रह्मणश्चेत्यनन्तरम् ।
तस्यांशत्वं मंत्रवर्णात् विभुत्वे चापि कर्मणः ॥ १५ ॥

फलस्य चाव्यतिकरः आभासत्वं च दर्शितम् ।
पादे चतुर्थे प्राणानां उत्पत्तिमिंद्रियात्मनाम् ॥ १६ ॥

दशैकत्वं च व्याख्याय तथा सूक्ष्माणुरूपताम् ।
तेभ्यः श्रेष्ठस्य भिन्नत्वं अवायुकरणात्मकम् ॥ १७ ॥

पंचवृत्तिं अणुत्वं च वह्न्याद्यत्राधिदैवतम् ।
प्रदर्श्याते परेशस्य संज्ञामूर्तिप्रकल्पनम् ॥ १८ ॥

॥ इति अविरोधाख्यद्वितीयाध्यायस्य अधिकरणानुक्रमः

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ साधनाख्यतृतीयाध्यायस्य प्रथमपादः ॥

( १ ) तदन्तरप्रतिपत्त्यधिकरणम् । सू. १–७

**१. तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ।**

देहाद्देहांतरप्रतिपत्तौ जीवः भूतसूक्ष्मैः संवेष्टितः रंहति गच्छाति। कुतः। द्युपर्जन्यपृथिवीपुरुषयोषित्सु पंचस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पंचाहुतीः दर्शयित्वा " इति तु पंचम्यामाहुतौ आपः पुरुषवचसो भवन्ति " ( छां ५.९.१ ) इत्यत्र अद्भिः परिवेष्टितस्य जीवगमनस्य श्रवणात् । प्रश्नः च तादृगेव ।

**२. त्र्यात्मकत्वात्तु भूयस्त्वात् ।**

छांदोग्ये अपां गमनमेव श्रूयते। तस्मात् कथं सर्वभूतसूक्ष्मैः परिष्वक्तः जीवो गच्छतीत्यनुमीयते। त्र्यात्मकत्वात् जलस्य। पूर्वं तेजोबन्नानां त्रिवृत्करणमुक्तम्। तस्मादप्सु आरंभकासु अन्यद्भूतद्वयं अवश्यं संग्रहणीयम् । श्रद्धासोमादिषु अप एव भूयस्त्वात तासामेव मुख्यत्वेन ग्रहणं वेदितव्यम् ।

**३. प्राणगतेश्च ।**

" तमुत्क्रामंतं प्राणोऽनूत्क्रामति " ( बृ ४.४.२ ) इति प्राणस्यापि जीवेन सह गमनात् । प्राणश्च नाश्रयं विना गंतुं शक्नोति। भूतसूक्ष्माणि आश्रयः ।

**४. अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ।**

" पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः " ( बृ ३.२.१३ ) इत्यत्र प्राणस्याग्न्यादौ गमनं श्रूयते। कथं तस्य जीवेन सह गमनम् । उच्यते। अग्न्यादिगमनं भाक्तम् । Vak is a प्राण; cf. सूत्र 2.4.14–15 where notwithstanding these देवताs, प्राण is said to be governed by the Soul.

**५. प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः।**

ननु प्रथमाहुतिः श्रद्धायाः। "पंचम्यामाहुतावापः पुरुषवचसो भवन्ति" ( छां ५.९.१ ) इति पंचम्यां आहुतौ आपः श्रूयन्ते न प्रथमायाम्। तत्कथं जीवस्य अबादिभिर्गमनमिति। उच्यते। यद्यपि पंचम्यामाहुतौ अपः साक्षात् श्रवणं तथापि श्रद्धादौ ता एव गृह्यन्ते। उपपत्तेः।

**६. अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः।**

ननु भवतु श्रद्धादौ अपः संभवः। छांदोग्ये ( ५.९.१ ) "आपः पुरुषवचसो भवन्ति" इति श्रूयते। न तत्र जीवस्य श्रवणम्। अश्रुतत्वात् कथं जीवः गृह्यते। उच्यते। "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति" ( छां ५.१०.३ ) इत्यादौ इष्टादिकारिणामार्चिरादिमार्गेण गतौ जीवस्य श्रूयमाणत्वात्।

**७. भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति॥**

भवतु जीवस्य गमनम्। परं चंद्रलोकगतः जीवः देवानां अन्न भवति। "ते चन्द्रं प्राप्यान्नं भवन्ति। तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति।" ( बृ ६.२.१६ ), "एष सोमो राजा तद्देवानामन्नम्" ( छां ५.१०.४ ) इति च श्रुतेः। एवं सति जीवस्य नित्यत्वं विरुध्येत। बाढम्। अन्नश्रुतिस्तु भाक्ता। "न वै देवा अश्नन्ति ..." ( छां ३.६.१ ) इत्यादिश्रवणात्। केनाप्यन्यप्रकारेण उपभोग्यता अन्नशब्देन सूच्यते। यथा राजा भृत्योपभोगं करोति तद्वत्।

( २ ) कृतात्ययाधिकरणम्। सू. ८–११

**८. कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च।**

चन्द्रमंडलं गत्वा "तस्मिन् यावत्संपातं उषित्वाऽथैतं एवाध्वानं पुनः निवर्तन्ते यथेतम्।" ( छां ५.१०.५ ), "रमणीयचरणाः ... ब्राह्मणयोनिं वा ... कपूयचरणाः ... श्वयोनिं वा" इति श्रूयते ( छां ५.१०.७ )। तत्र संदेहः। केन कारणेन निवर्तनं इति। कृतकर्मणः कश्चिदनुशयः परिशेषः

तेन प्रत्यारोहणम्। चन्द्रमंडलप्राप्तिसाधनमेव कर्म चन्द्रमंडले उपभुज्यते नेतरत्। येन क्रमेण गच्छान्ति तद्विपरीतेन ( अनेवं ) अवरोहन्ति। Shankara here discusses the **Karma** doctrine.

**९. चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः।**

ननु " रमणीयचरणाः, कपूयचरणाः " इत्यादिश्रवणात् "चरणं" = चारित्रं आचारः शीलं वा कारणं निवर्तने दृश्यते। नानुशयः। इति चेत्। न। अनुशयोपलक्षणार्थैव एषा चरणश्रुतिरिति कार्ष्णाजिनिः।

**१०. आनर्थक्यमिति चेन्न तदपेक्षत्वात्।**

अस्मिन् पक्षे चरणशब्दोदितस्य शीलस्य आनर्थक्यं भविष्याति। न। शीलापेक्षं हि कर्म। कर्मणा च चंद्रमंडलारोहावरोहौ। अतः अनुशयोपलक्षणार्थ एव चरणश्रुतिः।

**११. सुकृतदुष्कृते एवेति तु बादरिः॥**

बादरिस्तु चरणशब्देन " सुकृतदुष्कृते " एव प्रत्याय्येते इति मन्यते।

( ३ ) अनिष्टादिकार्यधिकरणम्। सू. १२–२१

**१२. अनिष्टादिकारिणामपि च श्रुतम्।**

ननु अनिष्टादिकारिणः अपि चंद्रलोकं गच्छान्ति। कस्मात्। " कपूयचरणाः " इत्यादिश्रुतेः। इति पूर्वपक्षः।

**१३. संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्।**

बाढम्। परं न ते चंद्रलोकं गच्छान्ति। निष्प्रयोजनत्वात्। परं संयमनं=यमलोकं गच्छान्ति। तत्र स्वदुष्कृतानुरूपाः यातनाः अनुभूय पुनः इमं लोकमवरोहंति। " वैवस्वतं संगमनं जनानाम् " ( ऋ १०.१४.१ ), " पुनः पुनर्वशमापद्यते मे ( यमस्य ) " ( कठ २.६ ) इति अनिष्टकारिणां गतिः दृश्यते।

**१४. स्मरान्ति च।**

मनुव्यासप्रभृतयः यमायत्तं कपूयकर्मविपाकं नाचिकेतोपाख्यानादिषु स्मरन्ति।

**१५. अपि च सप्त।**

सप्त रौरवाश्च स्मर्यंते पौराणिकैः नरकाः एव भूमयः दुष्कृतफलोपभोगस्य।

**१६. तत्रापि च तद्व्यापारादविरोधः।**

तत्रत्याश्च चित्रगुप्तादयो देवताः ग्राह्याः। किं यमस्य प्रयोजनमिति चेत्। न। तत्रापि नरकादौ देवतानां यमस्य अधीनत्वम्। यमाधीनाः हि ताः सर्वकर्मफलं प्राणिने उपदिशान्ति।

**१७. विद्याकर्मणोरिति तु प्रकृतत्वात्।**

ननु देवयानपितृयाणौ द्वावेव पंथानौ। कथं तृतीयः यमलोकः गृह्यते। बाढम्। श्रुतेः। तथाहि पंचाग्निविद्यायां "वेत्थ यथाऽसौ ( चंद्रलोकः ) लोकः न संपूर्यते" ( छां ५.३.३ ) इति प्रश्नस्य प्रतिवचनावसरे श्रूयते – "अथैतयोः पथोः न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति। जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते" ( छां ५.१०.८ ) इति श्रवणात्। एतयोः पथोः = विद्याकर्मणोरित्यर्थः। विद्यया कर्मणा च देवयानपितृयाणगत्योः प्रकृतत्वात्। एवं तृतीयः लोकः भवत्येव।

**१८. न तृतीये तथोपलब्धेः।**

भवतु तृतीयो लोकः। यः पुनः देहलाभाय पंचाहुतिक्रमः श्रुतः स तृतीये लोके प्राप्नुयात्। इति पूर्वपक्षः। उच्यते। पंचाहुतिनियमः तृतीये लोके न प्राप्नोति। "जायस्व म्रियस्वे"ति आहुतिनियममनपेक्ष्यैव तत्र जायमानस्य श्रूयमाणत्वात्।

**१९. स्मर्यतेऽपि च लोके।**

लोकेऽपि द्रोणधृष्टद्युम्नसीताप्रभृतीनां पंचाहुतिं अंतरेण जन्म स्मर्यते तद्वत्।

**२०. दर्शनाच्च।**

चतुर्विधभूतग्रामे "जरायुजांडजस्वेदजोद्भिज्ज"लक्षणे ( ऐ ३.३ ) स्वेदजोद्भिज्जयोरंतरेणैव ग्राम्यधर्मं उत्पत्तिदर्शनात् न तत्र पुरुषयोषिद्रूपाहुती संभवतः। ( छां ५.७–८ ).

**२१. तृतीयशब्दावरोधः संशोकजस्य॥**

ननु "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवंति आंडजं जीवजमुद्भिज्ज "मिति ( छां ६.३.१ ) त्रीण्येव बीजान्युक्तानि न चतुर्थम्। कथं तर्हि चतुर्विधभूतबीजसंग्रहः। उच्यते। तृतीयेनोद्भिज्जशब्देन स्वेदजस्यापि संग्रहः कर्तव्यः। संशोकजस्य = स्वेदजस्य।

( ४ ) साभाव्यापत्त्यधिकरणम्। सू. २२

**२२. साभाव्यापत्तिरुपपत्तेः॥**

चंद्रलोकात् पुनः अवरोहणकाले क्रमः श्रूयते – "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतं आकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा प्रवर्षति।" प्रवर्षणानंतरं "त इह व्रीहियवा ओषधिवनस्पतयः तिलमाषाः इति जायंते" ( छां ५.१०.५–६ ) इत्यादिश्रवणात्। तत्र संदेहः। किमाकाशादिरूपत्वं जीवस्य सर्वात्मना भवति वा अन्यथेति। आकाशवायुस्वरूपापत्तौ वाय्वादिक्रमो नोपपद्यते। आकाशस्य विभुत्वात्। उच्यते। आकाशादीनां साभाव्यं = साम्यमेवात्र विवक्षितम्।

( ५ ) नातिचिराधिकरणम्। सू. २३

**२३. नातिचिरेण विशेषात्॥**

आकाशादिप्रतिपत्तौ प्राग् व्रीह्यादिप्रतिपत्तेः आकाशादिषु न दीर्घं कालं जीवः तिष्ठति। व्रीह्यादिभावापत्तेरनंतरं "अतो वै खलु दुर्निष्प्रपतरम्" इति ( छां ५.१०.६ ) दुःखतराया गतेः श्रूयमाणत्वात् तत्पूर्वा गतिः सुखतरेति अनुमीयते। अयं च विशेषः श्रुतेरत्र विवक्षितः।

( ६ ) अन्याधिष्ठिताधिकरणम्। सू. २४–२७

**२४. अन्याधिष्ठितेषु पूर्ववदभिलापात्।**

व्रीह्यादिषु अन्यजीवाधिष्ठितेषु अवरोहतः जीवस्य संश्लेषः एव भवति न तादात्म्यं न च आकाशादिवत् साम्यम्। पूर्ववत् आकाशादिषुवत् अत्रापि न कंचित् कर्मव्यापारं परामृशति। अतो न व्रीह्यादिभावेन जीवस्यावस्थानम्। संश्लेषमात्रं तत्।

**२५. अशुद्धमिति चेन्न शब्दात्।**

ननु चंद्रलोकाद् भूलोकमवतरतां कथं व्रीह्यादिस्थावरभावः। तेषां दुष्कर्माभावात्। उच्यते। यज्ञयागादौ पशुहिंसादिदोषदर्शनात्। एवं तर्हि अशुद्धं तत्कर्म भविष्यति। न। तथा श्रवणात्। "अग्नीषोमीयं पशुमालभेत" इति श्रुत्या। (Quotation untraced).

**२६. रेतःसिग्योगोऽथ।**

व्रीह्यादिसंश्लेषानंतरं दीर्घकालेन पुरुषे रेतःसिग्योगो भवति। ततो योषिति जन्म, तत्र च शरीरप्राप्तिरिति उत्तरसूत्रे वक्ष्यति।

**२७. योनेः शरीरम्॥**

**॥ इति तृतीयाध्यायस्य प्रथमपादः॥**

## ॥ अथ तृतीयाध्यायस्य द्वितीयपादः ॥

( १ ) सध्याधिकरणम् । सू. १–६

**१. संध्ये सृष्टिराह हि।**

जागर्तिसुषुप्ति = प्रबोधसंप्रसादयोः संधौ भवति तत् संध्यं स्थानं स्वप्नस्थानं इति यावत् । तत्र "न तत्र रथाः न रथयोगाः न पंथानो भवंति । अथ रथान् रथयोगान् पथः सृजते" ( बृ ४.३.१० ) इत्यादि-सृष्टिः श्रूयते । सा किं पारमार्थिकी अथवा मायामयीति संदेहः ।

**२. निर्मातारं चैके पुत्रादयश्च।**

एके शाखिनः काठकाः "य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति ( क ५.८ ) निर्मातारं, "शतायुषः पुत्रपौत्रान् वृणीष्व" इति प्रकृत्य अंते "कामानां त्वा कामभाजं करोमि" ( क १.२३–२४ ) इति पुत्रादीन् च समामनन्ति । R. considers that sūtras 1 & 2 are the पूर्वपक्ष stating that the creation in dreams is the work of the Soul. According to R. the Siddhānta is that it is the work of ईश्वर !

**३. मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात् ।**

संध्या सृष्टिस्तु मायामात्रैव। कुतः। कात्स्न्येंन परमार्थवस्तुधर्मेण तस्याः स्वरूपं न अभिव्यज्यते। अतो मायामात्रेति सिद्धान्तः। R. interprets माया = आश्चर्य and then the sūtra means that "it is the wonderful creation of the Lord!" कात्स्न्येंनाभिव्यक्त॰ may refer to the जीव not being the fully developed form of ईश्वर; cf. 1.2.29 "अभिव्यक्ते-रिति आश्मरथ्यः।"

**४. सूचकश्च हि श्रुतेराचक्षते च तद्विदः।**

तथापि स्वप्नसृष्टेः सूचकत्वं न हीयते ( सूचकश्च स्वप्नो भवति )। कुतः। " यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने " ( छां ५.२.९ ) इति श्रुतेः। तथा स्वप्नशास्त्रविदां चैवाभिप्रायात्। R. – And therefore ( i.e. because it is the creation of Lord ) it is सूचक This sūtra, which embodies according to R. the सिद्धान्त, is placed last, that is, 6th in his Bhāshya.

**५. पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बंधविपर्ययौ।**

ननु जीवः परमेश्वर एव। तथा सति स्वप्ने सांकल्पिकी सृष्टिः भविष्यति पारमार्थिकी च, न तत्र कश्चिद्दोषः जीवस्य परैश्वर्यात्। उच्यते। न। जीवस्य सामर्थ्यं तिरोहितं मायादिभिः वर्तते, तस्मान्न सांकल्पिकी सृष्टिः। तिरोहितं तत् सामर्थ्यं परमात्मनः अभिध्यानात् परमेश्वरमभिध्यायतः जंतोराविर्भवति। ततश्च बंधमोक्षौ। एवं जीवस्य परमेश्वरत्वेऽपि संध्या सृष्टिर्मिथ्यैव। Cf. 2.3.13 " तदभिध्यानादेव तु ... " where elements ( भूतानि ) are said to be born from each other under His superintendence ( तदभिध्यानात् ). So there the creation of स्वप्नसृष्टि may be said to be effected by his superintendence.

**६. देहयोगाद्वा सोऽपि॥**

सोऽपि = जीवस्य ज्ञानैश्वर्यतिरोभावः देहोपाधियोगाद्वा संपद्यते। अतोऽस्य स्वप्नसृष्टेः मिथ्यात्वम्। Cf. सूत्र 2.3.48 for देहसंबंध.

Cf. इन्द्रियाणां श्रमात् स्वप्नमाहुः सर्वगतं बुधाः।

... ... ... ... ... ... ... ... ...

कार्ये व्यासक्तमनसः संकल्पो जाग्रतो ह्यपि।
यद्वन्मनोरथैश्वर्यं स्वप्ने तद्वन्मनोगतम्॥

मभा 12.216.6–7 ( CE 12.209.6–7 कार्य० for कार्ये ).

( २ ) तदभावाधिकरणम् । सू. ७–८

**७. तदभावो नाडीषु तच्छ्रुतेरात्मनि च ।**

अधुना सुप्तावस्था व्याख्यायते । तदभावः = स्वप्नाभावः सुप्तावस्थेत्यर्थः । तदा जीवः नाडीषु आत्मनि च शेते । नाडीद्वारा आत्मनि इत्यर्थः, न नाडीषु आत्मनि च पृथक्त्वेन वर्तते । श्रुतिर्यथा – " तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति " ( छां ८.६.३ ), " ताभिः ( नाडीभिः ) प्रत्यवसृप्य पुरीतति शेते " ( बृ २.१.१९ ), " सता सोम्य तदा संपन्नः भवति स्वमपीतो भवति " ( छां ६.८.१ ) इति च सता = परात्मना एकत्वदर्शनात् । " प्राज्ञेनात्मना संपरिष्वक्तः न बाह्यं किंचन वेद नांतरम् " इति च ( बृ ४.३.२१ ).

**८. अतः प्रबोधोऽस्मात् ॥**

इतश्च आत्मनि सुप्तिस्थानम् । यतः अस्मात् आत्मनः एव प्रबोधः जागृतिः ( Sic ) श्रूयते । " सतः आगत्य न विदुः सतः आगच्छामहे " ( छां ६.१०.२ ), " यथाऽग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति एवमेवास्मात् आत्मनः सर्वे प्राणाः ... " ( बृ २.१.२० ).

( ३ ) कर्मानुस्मृतिशब्दविध्यधिकरणम् । सू. ९

**९. स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥**

यः सुप्तः स एव प्रतिबुध्यते नान्यः । कस्मात् । सुप्तिपूर्वं यदवशिष्टं कर्म तस्यैव पुनः आरंभणात् । यः पूर्वं सुप्तः स एवाहमिति स्मृतेः । श्रुतिश्च – " पुनः प्रतिन्यायं प्रतियोनि आद्रवति बुद्धांतायैव " ( बृ ४.३.१६ ) ।

( ४ ) मुग्धेऽर्धसंपत्त्यधिकरणम् । सू. १०

**१०. मुग्धेऽर्धसंपत्तिः परिशेषात् ॥**

मुग्धः = मूर्च्छितः । मूर्च्छावस्थायां जीवस्य ब्रह्मणः अर्धसंपत्तिः । सुषुप्तौ तु सर्वसंपत्तिरिति भेदः । मूर्च्छितावस्था अर्धेन सुषुप्तिसाम्यं अर्धेन मरणसाम्यं भजते इत्यर्थः ।

N. B. – Rāmānuja's interpretation of the following 2 Adhikaranas i.e. ( सूत्रs ११–२१ & सूत्रs २२–३० ) is entirely different.

( ५ ) उभयलिङ्गाधिकरणम्। सू. ११–२१

**११. न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि।**

त्वंपदार्थः शोधितः। अधुना तत्पदार्थः शोध्यते। परमात्मनः " सर्वकर्मा सर्वकामः सर्वगंधः सर्वरसः " ( छां ३.१४.२ ) इति सविशेषं लिंगं, तथा च " अस्थूलमनणु अह्रस्वमदीर्घम् " ( बृ ३.८.८ ) इति निर्विशेषं लिंगं दृश्यते। तत्र स्थानतः पृथिव्याद्युपाधियोगात् सविशेषं न संभाव्यते। अतः निर्विशेषं ग्राह्यं सर्वत्र तथादर्शनात्। "अशब्दमस्पर्शमरूपमव्ययम्" (क ३.१५) इत्यादौ तद्दर्शनात्। According to R. उभयलिंग means " non-evil and good " ( अपहतपाप्मत्वादि & सत्यसंकल्पत्वादि ); and he interprets the sūtra to mean " that in spite of the abode ( स्थान ) of the Īshvara in the Soul it is not affected by Soul's imperfections (evils); because everywhere ( सर्वत्र ) the Soul is said to possess two characteristics ( अपहतपाप्मत्व & सत्यसंकल्पत्व ). Sūtra 12 similarly is said to refer to the भेद of जीव & ईश्वर, shewing the Lord does not share the Soul's evils or imperfections. ( The word भेद is of course strained for the purpose ). Sūtra 13, then, is said to refer to श्रुति "द्वा सुपर्णा etc." ( मुं ३.१.१ ) which shows that Lord and Soul though in one body are different. Sūtra 14 is interpreted to mean that tho' the Lord produces the form of elements by नामरूप, yet is devoid of form because it is the

agent (प्रधान) in creating forms. Sūtra 15 – प्रकाशवत् = प्रकाशवान् = ज्ञानमयः. The meaning is that in addition to सत्यसंकल्प, we must admit that the Lord is ज्ञानमय in order to render non-futile the श्रुति of सत्यसंकल्प ! !

**१२. न भेदादिति चेन्न प्रत्येकमतद्वचनात्।**

ब्रह्मणः भिन्ना हि आकाराः दृश्यन्ते। "चतुष्पात्" ( छां ३.१८.२ ), "षोडशकलम्" ( प्र ६.१ ), "वामनीत्वम्" = वामनवत् ह्रस्वं ( क ५.३ ) [ It refers to छां 4.15.3 " एष उ एव वामनीः " ], " त्रैलोक्य-शरीरत्वम्" ( बृ १.३.२२ " समः एभिः त्रिभिः लोकैः " ), " वैश्वानर-त्वम्" ( छां ५.११ २ " संप्रति:इमं आत्मानं वैश्वानरम् अध्येति " )। अतः भेदान्न निर्विकल्पलिंगत्वं इति चेत्। न। प्रत्युपाधिभेदं अभेदं एव ब्रह्मणः शास्ति श्रुतिः। यथा " यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽय-मात्मा " इति ( बृ २.५.१ ).

**१३. अपि चैवमेके।**

एके शाखिनः एवं निर्विशेषमेव ब्रह्म समामनन्ति। " मनसैवेदमाप्तव्यं नेह नानास्ति किंचन " इति ( क ४.११ ), " सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् " ( श्वे १.१२ ) च।

**१४. अरूपवदेव हि तत्प्रधानत्वात्।**

रूपाकाररहितमेव ब्रह्म ग्राह्यं अनेकश्रुतिषु तत्प्रधानत्वात्। श्रुत-यस्तु – "अस्थूलमनणु" ( बृ ३.८.८ ); "अशब्दमस्पर्शम्" ( क ३.१५ ); " आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म " ( छां ८.१४.१ ); " तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्मा ब्रह्म सर्वा-नुभूः " ( बृ २.५.१९ ). Cf. Bhāshya on 'तत्तु समन्वयात्' ( १.१.४ ).

**१५. प्रकाशवच्चावैयर्थ्यात्।**

अरूपवत्त्वे सति रूपादिवैयर्थ्यप्रसंगः इति संदेहः। उच्यते। न वैयर्थ्यम्। कुतः। यथा प्रकाशः वियद्व्याप्यावतिष्ठमानः अङ्गुल्याद्युपाधिसंबंधात् ऋजुवक्रादिभावं भजते एवं ब्रह्माऽपि उपासनार्थं रूपादिवत् भवति। Cf. "प्रकाशादिवन्नैवं परः" sūtra 2.3.46. See also सूत्रs 25 and 28 of this पाद.

N. B. – According to some प्रकाश° is a new Adhikarana.

**१६. आह च तन्मात्रम्।**

"स यथा सैंधवघनोऽनंतरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानंतरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" ( बृ ४.५.१३ ).

**१७. दर्शयति चाथो अपि स्मर्यते।**

"अथात आदेशो नेति नेति" ( बृ २.३.६ ), "अन्यदेव तद्विदितादथो अविदितादधि" ( के १.३ ), "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" ( तै २.४ ), "अनादिमत् परं ब्रह्म न सत् तत् नासदुच्यते" ( गी १३.१२ ), "माया ह्येषा मया सृष्टा" ( मभा १२.३३९.४६ of the चित्रशाळा edition; १२.३२६.४३ of the Critical Edition of the BORI ). Cf. The story of Vāshkalin (बाष्कलि) asking Bāhva (बाध्व) about Brahma and the latter keeping silence.

**१८. अत एव चोपमा सूर्यकादिवत्।**

"यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा॥"

इत्यादिदृष्टान्तस्य सामंजस्यं उपपद्यते। तथा ब्रह्मबिंदूपनिषदि श्रूयते – "एकधा बहुधा चैव दृश्यते जलचंद्रवत्।" ( ब्रह्मबिंदु १२ ).

**१९. अंबुवदग्रहणात्तु न तथात्वम् ।**

सूर्यात् पृथग्भूतं मूर्तं जलम् । अतो न दृष्टान्तसाम्यं इति पूर्वपक्षः ।

**२०. वृद्धिह्रासभाक्त्वमन्तर्भावात् उभयसामंजस्यादेवम् ।**

न सर्वसारूप्येन दृष्टान्तः भवति । जलगतं सूर्यबिंबस्य वृद्धिह्रासभाक्त्वमेव अत्र विवक्षितम् । तेन उभयोः दृष्टान्तदार्ष्टान्तिकयोः सामंजस्यं वेदितव्यम् ।

**२१. दर्शनाच्च ॥**

" अनेन जीवेनात्मनानुप्रविश्य " ( छां ६.३.२ ),

" पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।

पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् ॥ " ( बृ २.५.१८ )

इत्यादौ उपाधिषु परमात्मनः प्रवेशदर्शनात् ।

( ६ ) प्रकृतैतावत्त्वाधिकरणम् । सू. २२–३०

**२२. प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।**

" द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च " ( बृ २.३.१ ) इत्युपक्रम्य पंचमहाभूतानि पृथिव्यप्तेजोरूपं त्रयं मूर्तं वाय्वाकाशरूपं द्वयं चामूर्तमिति विभज्य अमूर्तरसस्य पुरुषशब्दोदितस्य माहारजनादीनि ( केशरवत् पीतादीनि ) रूपाणि दर्शयित्वा पुनः पठ्यते – " अथात आदेशो नेति नेति, न ह्येतस्मादिति नेत्यन्यत्परमस्ति " ( बृ २.३.६ ) इति । तत्र प्रश्नः । इति यः प्रतिषेधः क्रियते स कस्य । मूर्तामूर्तरूपयोः ब्रह्मणो वा । उच्यते । एतावत्त्वं रूपयोः यत्प्रकृतं तस्यायं निषेधः न ब्रह्मणः । यतः भूयः " न ह्येतस्मादिति " ब्रवीति । ब्रह्मणः निषेधश्चेत् नैवं ब्रूयात् भूयः । Here again R. differs. According to him, " नेति नेति " is not a simple negation. He interprets thus : Not only the aforesaid ( प्रकृत ) qualities, but something more ( भूयः ) is predicated of the Lord in बृ !!! On this theory sūtra 25 is inter-

preted to mean that in addition to प्रकृतैतावत्त्व, the qualities of प्रकाश ( ज्ञान ) and others are attributed to ब्रह्म !! The whole of this interpretation is obviously unnatural ! Recourse is had to it simply because R. does not recognise निर्विशेष Brahma. In conclusion sūtra 29 is interpreted by R. to mean पूर्ववत् = as soul is said to be an अंश of Brahma in 2.3.43, so the non-sentient being ( अमूर्त in बृ passage ) may be considered an amsha ( अंश ) of Brahma. So Brahma is made up of sentient ( जाव ) and non-sentient ( जगत् ) parts, which keep their individual characteristics though absorbed in Brahma like the seeds of a pomegranate ( दाडिम ) inside its rind !!

**२३. तदव्यक्तमाह हि।**

यदिन्द्रियैः न गृह्यते तत् किंप्रकारकं इति चेत् "अव्यक्तं" उच्यते। "न चक्षुषा गृह्यते नापि वाचा" ( मुं ३.१.८ ); "स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते" ( बृ ३.९.२६ ); "यत्तदद्रेश्यमग्राह्यम्" ( मुं १.१.६ ); "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने" ( तै २.७ )। स्मृतिरपि "अव्यक्तोऽयमचिंत्योऽयम्" ( गी २.२५ ).

**२४. अपि च संराधने प्रत्यक्षानुमानाभ्याम्।**

अपि चैनं आत्मानं योगिनः "संराधने" भक्तिध्यानप्रणिधानाद्यनुष्ठाने पश्यन्ति। अतः न तस्याभावः शक्यते। प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां च। "ज्ञानप्रसादेन विशुद्धसत्त्वः ... ध्यायमानः" ( मं ३.१.८ ) इति श्रुतिः। "योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्" इति स्मृतिः ( मभा ५.४६.१ ff of the चित्रशाळा edition; अध्याय 45 of the B.O.R.I. edition ).

**२५. प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ।**

प्रकाशादिःयथा एकोऽपि अंगुल्याद्युपाधिकर्मसु भेदात् भिन्नात्मकः दृश्यते एवं अत्र अवैशेष्यं द्रष्टव्यम् । प्रकाशश्च अभेदबुद्धिश्च वेदान्तेषु अभ्यासाद् भवति । कर्मणि = उपाधौ. See comm. on sūtra 15 supra & 28 infra.

**२६. अतोऽनन्तेन तथा हि लिंगम् ।**

अतश्च:अनन्तेन परमात्मना जीवस्य ऐक्यम् । " स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति " ( मं ३.२.९ ), " ब्रह्मैव सन् ब्रह्माप्येति " ( बृ ४.४.६ ) इति लिंगात् ।

**२७. उभयव्यपदेशात्त्वहिकुण्डलवत् ।**

यथा आहिरित्यभेदः कुण्डलाभोगप्रांशुत्वादि भेदः । तथा जीव-प्राज्ञयोः भेदाभेदौ द्रष्टव्यौ ।

**२८. प्रकाशाश्रयवद्वा तेजस्त्वात् ।**

यथा प्रकाशः तदाश्रयः सूर्यश्च न भिन्नौ उभयोरपि तेजस्त्वात् । तथा जीवपरमात्मानौ द्रष्टव्यौ ।

**२९. पूर्ववद्वा ।**

यथा पूर्वं उपदिष्टं " प्रकाशादिवच्चावैशेष्यं " ( सू २५ ) तद्वत् वा । For R. view, see note above.

**३०. प्रतिषेधाच्च ॥**

" नान्योऽतोऽस्ति द्रष्टा " ( बृ ३.७.२३ ) इत्येवमादयः प्रति-षेधा दृश्यन्ते । तस्मान्निर्विकल्पं ब्रह्मैवाभिगंतव्यं इति सिद्धांतः ।

( ७ ) पराधिकरणम । सू. ३१–३७

**३१. परमतः सेतून्मानसंबंधभेदव्यपदेशेभ्यः ।**

अतः अव्यक्तादपि परं किंचित् भवेत् इति संदेहः । कुतः । " अथ य आत्मा स सेतुः विधृतिः ( छां ८.४.१ ), " सेतुं तीर्त्वा "

( छां ८.४.२ ) इत्यत्र सेतुशब्दप्रयोगात्। सेतुश्च एकस्मादन्यं कंचित् प्रदेशं प्रापयति। उन्मानस्य परिमाणस्य व्यपदेशश्च श्रूयते – यथा "चतुष्पाद्" ( छां ३.१८.२ ), "षोडशकलम्" ( प्र ६.१ ) इत्यादि। यच्च परिमितं ततोऽन्यत् किंचिदपि ततः परं लोके दृश्यते एव। संबंधव्यपदेशश्च "सता ... संपन्नो भवति" ( छां ६ ८.१ )। संबंधाच्चान्यद् वस्तु अपेक्ष्यते। भेदव्यपदेशाच्च, यथा "य एषोंऽतरादित्ये ..." इति ( छां १.६.६. )। तस्मादव्यक्तादपि किंचित्परं स्यादिति पूर्वपक्षः।

**३२. सामान्यात्तु।**

'सेत्वा'दिशब्दानां तु सामान्येन दृष्टांतः न सर्वांशेन। अतः न अव्यक्तात् किंचित् परं विद्यते।

**३३. बुद्ध्यर्थः पादवत्।**

बुद्ध्यर्थं = उपासनार्थं अयं भेदः। पादवत्। यथा कार्षापणस्य रूप्यकस्य वा पादा व्यवहारसौकर्याय प्रकल्प्यन्ते तद्वत्। यथा वा मनसो वागादयः पादाः कल्प्यन्ते तद्वत वा। Cf. 2.3.44 "पादोऽस्य विश्वा भूतानि" etc. ( ऋ १०.९०.३ ).

**३४. स्थानविशेषात् प्रकाशादिवत्।**

**३५. उपपत्तेश्च।**

**३६. तथान्यप्रतिषेधात्।**

"ब्रह्मैवेदं सर्वम्" ( मं २.२.११; the text reads विश्वं & not सर्वम्; शांभा has सर्वम् ). "यस्मात्परं नापरमस्ति किंचित्" ( श्वे ३.९ ) इत्यादिप्रतिषेधश्रवणात्।

**३७. अनेन सर्वगतत्वमायामशब्दादिभ्यः॥**

अनेन सेत्वादिव्यपदेशनिराकरणेन तथा **आयाम**शब्दादिभ्यः **व्याप्ति**-वाचकशब्देभ्यश्च अस्यात्मनः सर्वगतत्वं सिद्धम्। व्याप्तिस्तु "आकाशवत् सर्वगतश्च नित्यः" [ (?) ], "यावान्वा अयमाकाशस्तावानेषः ..."

( छां ८.१.३ ) इत्यादिः । गीतासु च " नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः " ( २.२४ ).

( ८ ) फलाधिकरणम । सू. ३८–४१

**३८. फलमत उपपत्तेः ।**

जंतूनां इष्टानिष्टव्यामिश्रलक्षणं कर्मफलं न केवलात् कर्मणः परं ईश्वरादेव भवति । कुतः । उपपत्तेः । कर्मणस्त्वनुक्षणविनाशिन कालांतरभावि फलं भवतीत्यनुपपन्नम् । न च अपूर्वस्याचेतनस्य चेतनाप्रवर्तितस्य प्रवृत्त्युपपत्तिः । न च आत्मनः संबंधं वर्जयित्वा फल भवति । भोक्तुरभावात् । See sūtra 2.3.41. The kartrtva ( कर्तृत्व ) of जीव is also derived from परमेश्वर.

**३९. श्रुतत्वाच्च ।**

" स वा एष महानजो ... अन्नादः वसुदानः " ( बृ ४.४.२४ ) इत्यादिश्रुतेश्च । अन्नं आ समंतात् लोकेभ्यः ददाति इत्यर्थः । [ शांभा सर्वभूतस्थः सर्वान्नानां अत्ता ( अन्नादः ) ].

**४०. धर्मं जैमिनिरत एव ।**

जैमिनिराचार्यः अत एव हेतो. ("श्रुतेः उपपत्तेश्च ) धर्मं फलस्य दातारं मन्यते । अपूर्व defined in Bhāshya.

**४१. पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥**

बादरायणः आचार्यः पूर्वोक्तं ईश्वरमेव फलहेतुं मन्यते । कुतः । धर्माधर्मयोरपि कारणत्वेन कारयितृत्वेन वा ईश्वर एव हेतुर्व्यपदिश्यते । यथा " एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमधो निनीषते " ( कौ ३.८ )इत्यादिश्रवणात् । गीतासु च " लभते च ततः कामान् मयैव विहितान् हि तान् " इति ( ७.२२ ) । ईश्वरस्य च कृतप्रयत्नापेक्षत्वान्न दोष इत्युक्तं प्राक् ।

॥ इति तृतीयाध्यायस्य द्वितीयपादः ॥

# ॥ अथ तृतीयाध्यायस्य तृतीयपादः ॥

( १ ) सर्ववेदान्तप्रत्ययाधिकरणम् । सू. १—४

**१. सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ।**

•प्रत्ययमिति एकवचनं अविवक्षितम् । सर्वेषु वेदान्तेषु प्रतीयंते इति सर्ववेदान्तप्रत्ययानि विज्ञानानि सर्वेषु वेदान्तेषु विहिताः विद्याः इत्यर्थः। तानि च ज्ञानानि तानि तान्येवाभिन्नानि भवितुमर्हन्ति । कुतः । चोदनादि-हेतूनां अविशेषात् । पूर्वमीमांसायां ( २.४.८ ) "नाम-रूप-धर्मविशेष-पुन-रुक्ति – निंदा – शक्ति – समाप्तिवचन – प्रायश्चित्त – अन्यार्थदर्शन – शब्दांतर – संख्या – प्रक्रियातोऽपि कर्मभेदः स्यादि "ति कर्मभेदकारणानि पूर्वपक्षीकृत्य सिद्धांतितम् – " एकं वा संयोगरूप – चोदनाऽऽख्याऽविशेषा" दिति ( पूमीसू २.४.९ )। तदेवात्राभिधीयते 'चोदनाद्यविशेषा'दित्यत्र आदिशब्देन । Cf. sūtra 58 infra "नानाशब्दादिभेदात्." "एकस्मिन् वेदान्ते यानि ज्ञानानि तान्येव वेदान्तान्तरेष्वपि विहितानि भवंतीत्यर्थः" – आनंदगिरि.

**२. भेदान्नेति चेन्नैकस्यामपि ।**

स्थानस्य शाखायाः गुणानां वा भेदात् भिन्नानि ज्ञानानि इति चेन्न। एकस्यामपि विद्यायां एवंजातीयकः भेदः उपपद्यते। यथा छांदोग्ये ( ५.१.१ ) – बृहदारण्यके ( ६.१.१ ) उक्तपंचाग्निविद्योपासनयोः स्वल्प-भेदेऽपि विद्यैकत्वम् ।

**३. स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ।**

ननु आथर्वणिकानां विद्यां प्रति शिरस्यग्निधारणं व्रतं अपेक्षितम् । नान्येषाम् । बाढम् । तथापि न विद्यायाः भेदः । कुतः । शिरोव्रतस्य स्वाध्यायत्वेन "समाचारे" आथर्वणिकानां वेदव्रतोपदेशपरे ग्रंथे पठितत्वात्

( Cf. 'शिरोव्रतम्' मुं ३ २.१० )। तच्छाखीयानामधिकारसिद्धये इदं बोध्यं न सार्वत्रिकमिति । यथा च सवाः होमाः सौर्यादयः शतौदनपर्यंताः आथर्वणिकानां नियम्यंते नेतरेषां तद्वत् ।

**४. दर्शयति च ॥**

" सर्वे वेदा यत्पदमामनंति " ( क २.१५ ) इत्यादिश्रुतिषु सर्ववेदांतेषु वेद्यैकत्वस्योपदेशात् ।

( २ ) उपसंहाराधिकरणम् । सू. ५

**५. उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च ॥**

स्थिते चाप्येवंविधे एकत्वे सर्वविज्ञानानां, समाने विज्ञाने ( विद्यायां ) अन्यत्रोदितानां विज्ञानगुणानां समुपसंहारः कर्तव्यः । कुतः । अर्थाभेदात् । य एव हि एकत्र गुणानां अर्थः विद्योपकारकः स एव अन्यत्र इष्टः । यथा विधिशेषाणां अग्निहोत्रादिधर्माणां तदेवाग्निहोत्रकर्म सर्वत्रेति अर्थाभेदादुपसंहरणम् । एवमत्रापि ।

N. B. – प्रयोजनसूत्रमिदम् । "सर्वाभेदा"दिति ( सू १० ) अस्यैव प्रपंचः ।

( ३ ) अन्यथात्वाधिकरणम् । सू. ६–८

**६. अन्यथात्वं शब्दादिति चेन्नाविशेषात् ।**

पूर्वपक्षसूत्रमिदम् । छांदोग्य ( १.२.७ ), काण्व ( बृ १.३.७ ) शाखयोः उद्गीथविद्ययोः भेदः अभेदो वा इति संशयः । तत्र प्रथमाधिकरणन्यायेन एकत्वं प्राप्तम् । परंतु तन्न युक्तम् । अन्यथात्वात् । अन्यथा हि प्रक्रमंते वाजसनेयिनः ( काण्वाः ); अन्यथा च छंदोगाः । " त्वं न उद्गाय " ( बृ १.३.१ ) इति एकस्यां प्राणस्य कर्तृत्वम् । "तमुद्गीथमुपासांचक्रिरे" ( छां १.२.७ ) इति अन्यत्र प्राणस्य उद्गीथत्वं न तत्कर्तृत्वम् । इति उपक्रमभेदः । तस्मान्न विद्यैकत्वमिति चेत् । न । अविशेषात् । एतावता विशेषेण न विद्याभेदः । कुतः । बहुतरस्य अन्यस्य अविशेषस्य श्रवणात् । अतो विद्यैकत्वमिति पूर्वपक्षः ।

**७. न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्।**

सिद्धान्तसूत्रम्। न वा विद्यैकत्वम्। कुतः। प्रकरणस्य प्रक्रमस्य भेदात्। स एवात्र मुख्यः यथा परमार्थदृष्टिसाम्येपि "आकाशो ह्येवैभ्यो ज्यायान्" ( छां १.९.१ ), "स एष परोवरीयान् उद्गीथः" ( छां १.९.२ ) इत्यत्र समानशाखायामपि विद्यायाः भेद एव निर्धारितः। तद्वत् इहापि विद्यायाः भेदः।

**८. संज्ञातश्चेत्तदुक्तमस्ति तु तदपि॥**

ननु उभयोरपि विद्ययोः "उद्गीथविद्ये"ति एकैव संज्ञा अस्ति। अतो न विद्याभेद इति चेन्न। प्रकरणात् भेद एवेति पूर्वसूत्रे यदुक्तं तदत्रापि उपपद्यते। एकस्यां शाखायां अपि भिन्नयोः विद्ययोः एका संज्ञा दृश्यते परोवरीयस्त्वाद्युपासनेषु उद्गीथविद्येति।

( ४ ) व्याप्त्यधिकरणम्। सू. ९

**९. व्याप्तेश्च समंजसम्॥**

छांदोग्ये ( १.१.१ ) "ओमित्येतदक्षरमुद्गीथमुपासीत" इति ओंकारस्य उद्गीथस्य सामानाधिकरण्यं अस्यामेवोद्गीथविद्यायां श्रूयते। सामानाधिकरण्ये तु "अध्यास – अपवाद – एकत्व – विशेषण "पक्षाः संभवन्ति। तत्र प्रथमपक्षत्रयं त्यक्त्वा विशेषणपक्षः अंगीक्रियते। कुतः। व्याप्तेः। ओंकाराक्षरस्य वेदत्रयसामान्यात्। न वेदत्रयसाधारणः ओंकारोत्र विवक्षितः। किंतु उद्गीथशब्दविशिष्टः उद्गीथावयवभूतः ओंकार एव विवक्षितः।

N. B. – These are thus two distinctions pointed out – (1) in sūtra 6 viz. that प्राण is the उद्गातृ in one case and उद्गीथ in the other, and (2) उद्गीथ is the whole in one case, while it is confined to ओम् of the उद्गीथ in the other. R. thus considers sūtra 9 to be a part of the Adhik. from 6–8.

( ५ ) सर्वाभेदाधिकरणम् । सू. १०

**१०. सर्वाभेदादन्यत्रेमे ॥**

प्राणविज्ञाने वसिष्ठादिगुणानां उपसंहर्तव्यत्वम् । वाजसनेयिनां छंदोगानां च प्राणसंवादे " त्वं तद्वसिष्ठोऽसि " ( बृ ६.१.१४; छां ५.१.१३ ); कौषीतकिनां तु " अथातो निःश्रेयसादानं " ( कौ २.१४ ) इति निःश्रेयसस्य = श्रैष्ठ्यस्य आदानमिति श्रैष्ठ्यगुणः उक्तः। तत्र सिद्धांतः सर्वेषां गुणानां सर्वत्र उपसंहारः कर्तव्य इति। कुतः। सर्वाभेदात् = सर्वत्र हि तदेवैकं प्राणविज्ञानं प्रत्यभिज्ञायते इति गुणवतः भेदाभावात् ।

( ६ ) आनन्दाद्यधिकरणम । सू. ११–१३

**११. आनंदादयः प्रधानस्य ।**

तस्मादेव कारणात् ( सर्वाभेदात् ) आनंदादयः प्रधानस्य ब्रह्मणः सर्वे धर्माः विज्ञानघनत्वसर्वगतत्वादयः सर्वत्र प्रतिपत्तव्याः ।

**१२. प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ।**

ननु एवं सति " तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। " ( तै २.५ ) इत्यादिगुणानां उपसंहारः प्राप्येत । अतः उच्यते। न प्रियशिरस्त्वादिगुणोपसंहारः। तेषां अप्राप्तिः। कुतः। उपचयापचयरूपा हि एते गुणाः। हर्षविशेषो मोदः। प्रकृष्टः ( मोदः ) प्रमोदः। एवं उच्चावचभेदः वेद्यभेदे सति संभवति। न वेद्यैकत्वे। अतो न प्रियशिरस्त्वादीनां अत्र प्राप्तिः।

**१३. इतरे त्वर्थसामान्यात् ॥**

इतरे तु आनंदादयः गुणाः अर्थस्य प्रतिपाद्यस्य ब्रह्मणः सामान्यात् एकत्वात् सर्वत्र उपसंहर्तव्याः ।

( ७ ) आध्यानाधिकरणम् । सू. १४–१५

**१४. आध्यानाय प्रयोजनाभावात् ।**

काठके ( ३.१०–११ )

" इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः॥
... ... ... ... ... ... ... ... ...
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः॥" इति श्रूयते। तत्र "इदमस्मात्परं इदमस्मात्परं" इति प्रत्येकस्य पूर्वस्मात् परत्वं न विवक्षितम् ( cf. शांभा on 1.4.1 )। आध्यानायैव तत। किंतु पुरुषस्य परत्वं विवक्षितम्। कुतः। अन्येषां परत्वकथनस्य प्रयोजनाभावात्। तस्मात् पुरुषस्यैव वेद्यत्वम्।

R. does not consider this & the following to be separate Adhi. up to sūtra 17. According to him this sūtra (14) refers to प्रियशिरस्त्वादि and says that these qualities are for meditation only and not to be included in विद्यैकत्व.

**१५. आत्मशब्दाच्च॥**

" एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" ( क ३.१२ ) इति प्रकृतं पुरुषं आत्मेत्याह। अतश्चानात्मत्वमितरेषाम्। तस्मात्पुरुषस्यैव वेद्यत्वम्।

८. आत्मगृहीत्यधिकरणम्। सू. १६–१७

**१६. आत्मगृहीतिरितरवदुत्तरात्।**

" आत्मा वा इदमेक एवाग्र आसीत्" ( ऐ १.१ ), " स इमाँल्लोकानसृजत" ( ऐ १.२ ) इत्यत्र आत्मशब्देन परमात्मा अभिलप्यते न विराट्। कुतः। उत्तरात् ग्रंथात्। तथा इतरसृष्टिप्रभववाक्येषु "तस्माद्वा एतस्मादात्मनः आकाशः संभूतः" ( तै २.१ ) आत्मशब्देन परमात्मनः ग्रहणात्।

R. considers that sūtras 15 & 16 refer to आत्मा in आत्मा आनंदमय.

**१७. अन्वयादिति चेत् स्यादवधारणात् ॥**

वाक्यान्वयान्न परमात्मनो ग्रहणमिति चेत् । न । स्यात् अवधारणात् । प्रागुत्पत्तेरात्मैकत्वावधारणं आंजसमवकल्पते । प्रागुत्पत्तेः आत्मा परमात्मैव संभवति नान्यः “ आत्मा वा इदमेक एवाग्र आसीदि ”त्यतः परं “ नान्यत् किंचन मिषत् ” ( ऐ १.१ ) इति श्रवणात् ।

( ९ ) कार्याख्यानाधिकरणम् । सू. १८

**१८. कार्याख्यानादपूर्वम् ॥**

छंदोगाः वाजिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्य अन्नं आम्नाय अनंतरं प्राणस्यैव ‘आपः’ वासः आमनंति । “ तस्माद्वा एतदशिष्यन्तः ( अन्नग्रहणं कुर्वंतः ) पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधाति ” ( छां ५.२.२ ) इति आपोशनं श्रूयते । “ अशित्वाऽऽचामंत्येतमेव तदनं अनग्नं कुर्वंतो मन्यन्ते ” ( बृ ६.१.१४ काण्वपाठः ), “ तस्मादेवंविद् अशिष्यन्नाचामेत् अशित्वा चाचामेत् एतमेव तदनं अनग्नं कुरुते ” ( बृ. माध्यंदिनपाठः ) । तत्र प्राणस्य अनग्नताचिंतनं एव विधेयम् । न आचमनस्य विधेयत्वम् । कुतः । प्राप्तमिदं शुद्धिकार्यत्वेन स्मृत्युक्तं आचमनम् ( मनु २.५३ ) । अपूर्वं तु अनग्नताकरणम् । तस्मात्तदेव गृह्यते विधेयत्वेन । तस्माद् वासोविज्ञानमेवेह विधीयते । तस्मादनग्नताबुद्धेरेवात्र प्राणोपासनायां ग्रहणम् ।

( १० ) समानाधिकरणम् । सू. १९

**१९. समान एवं चाभेदात् ॥**

काण्वाग्निरहस्यबृहदारण्यकयोः शांडिल्यविद्याया एकत्वम् । “ स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम् ” ( शब्रा १०.६.३.२ ) इत्येवमादयः गुणाश्च श्रूयंते । तथा तस्यामेव शाखायां “ सर्वस्येशानः सर्वस्याधिपतिः ” ( बृ ५.६.१ ) इत्यन्ये गुणाश्चाभिहिताः । तदत्र समानायां अपि शाखायां विद्यैकत्वं गुणोपसंहारश्चेत्युपपन्नम् ।

( ११ ) संबन्धाधिकरणम् । सू. २०–२२

**२०. संबन्धादेवमन्यत्रापि।**

ननु एवं सति "अहर्" "अहम्" इति आदित्य-अक्षि-पुरुषयोः एकत्वे गुणोपसंहारः प्राप्तः संबंधात् इति पूर्वपक्षः।

**२१. न वा विशेषात्।**

सिद्धांतः। न अभेदत्वम्। कुतः। विशेषात्। बृहदारण्यके (५.४.१) "सत्यं ब्रह्मे"त्युपक्रम्य "तद्यत् तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मंडले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः" (बृ. ५.५ २) इति तस्यैव सत्यस्य ब्रह्मणः "आदित्यमंडलं" "चक्षु"रिति द्वे आयतने उपदिश्य अधिदैवतस्य "तस्योपनिषदहः" इति (बृ ५.५.३), तथा अध्यात्मस्य "तस्योपनिषदहम्" इति (बृ ५.५ ४) नामद्वयं (उपनिषद् = नाम) दर्शितम। विशेषात् अस्मान्न तयोः एकत्वमिति सिद्धांतः।

**२२. दर्शयति च॥**

"तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" (छां १.७.५) इति भेददर्शनात्। तस्माच्च न गुणोपसंहारः।

( १२ ) सम्भृत्यधिकरणम। सू. २३

**२३. संभृतिद्युव्याप्ती अपि चातः॥**

इतश्च न केवलात् संबंधात् [illegible] संभृति-द्युनिवेश-प्रभृतीनां संग्रहः। राणायनीयानां खिलेषु —

"ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान।" (अथर्ववेद १९.२२.२१) इति ब्रह्मणः वीर्यसंभृति-द्युनिवेशादयो गुणाः श्रूयंते। तेषामेवोपनिषदि शांडिल्यादयो ब्रह्मविद्याः पठ्यंते (छां ३.१४.३ "ज्यायान् दिवः" इत्यादि)। ब्रह्मसंबंधादुभयोर्गुणोपसंहार इति चेन्न। विशेषादिपूर्वाधिकरणहेतुदर्शनात्। तस्मान्न विद्यैक्यम्।

( १३ ) पुरुषविद्याधिकरणम्। सू. २४

**२४. पुरुषविद्यायामिव चतरेषामनाम्नानात्॥**

तैत्तिरीयकतांडिनोः पुरुषविद्यायाः पृथक्त्वम्। कुतः। तांडिनां पैंगिनां च रहस्यब्राह्मणे पुरुषविद्या श्रूयते। "पुरुषो वाव यज्ञः" (Cf. छां ३.१६.१) इति। तत्र तदीयमायुः त्रेधा विभज्य (२४+४४+४८= ११६) सवनत्रयं कल्पितम्। अन्ये च गुणास्तत्र दर्शिताः आशीर्मंत्रादयश्च। तैत्तिरीयका अपि कंचित् पुरुषयज्ञं कल्पयंति। "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी" इत्यादि (तैआ १०.६४)। तथापि न गुणोपसंहारः। कुतः। यथैकेषां शाखिनां तांडिनां पैंगिनां च पुरुषविद्यायां आम्नानं तथा इतरेषां तैत्तिरीयाणां नैव भवति। अतो विद्याया भेदः अवगंतव्यः।

१४. वेधाद्यधिकरणम्। सू. २५

**२५. वेधाद्यर्थभेदात्॥**

वेदमंत्रप्रवर्ग्यादीनामनंगत्वम्। आथर्वणिकानामुपनिषदि आरंभे "सर्वं प्रविध्य हृदयं प्रविध्य" इत्यादयो मंत्राः श्रूयंते। तांडिनां "देव सवितः प्रसुव" इति (साब्रा १.१.१)। शाट्यायनिनाम् – "श्वेताश्वो हरितनीलोऽसि" इति। तैत्तिरीयाणां "शं नो मित्रः शं वरुणः" इति (तै १.१)। वाजसनेयिनां तूपनिषदारंभे प्रवर्ग्यब्राह्मणं पठ्यते। तत्र प्रश्नः। किमिमे प्रविध्यादयो मंत्राः सर्वासु विद्यासु उपसंह्रियेरन् वा नेति। नेति सिद्धान्तः। कस्मात्। अर्थभेदात्। न केवलं प्रथमारंभपाठत्वेन संनिधिमात्रेण उपसंहारोपपत्तिः। "श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति (पूमी ३.३.१४) न्यायात्।

(१५) हान्यधिकरणम्। सू. २६

**२६. हानौ तूपायनशब्दशेषत्वात् कुशाच्छंदःस्तुत्युपगानवत् तदुक्तम्॥**

अस्ति तांडिनां श्रुतिः। "अश्व इव रोमाणि विधूय पापं ... अकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" (छां ८.१३.१)। तथैव कौषीतकिनः

( पठंति ) " तत् सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतं उपयंति, अप्रिया दुष्कृतम् " ( कौ १.४ )। तथा च शाट्यायनिनः " तस्य पुत्रा दायमुपयंति, सुहृदः साधुकृत्यां, द्विषंतः पापकृत्या"-मिति। तत्र प्रश्नः। इह एकत्र ब्रह्मलोकं गतस्य सुकृतदुष्कृतहानं 'विधूननम्' श्रूयते केवलम्; अन्यत्र सुकृतदुष्कृतहानं तयोश्च प्रियाप्रियैरुपादानम् ( उपायनम् ? )। तत्र हानौ उपादानं अन्तर्भवति वा नेति। अन्तर्भाव्यते इति सिद्धान्तः। कुतः। विधूननम् = हानम्। हानशब्दशेषश्च उपादान ( उपायन ? ) शब्दः। तत्र दृष्टान्तः। कुशा-छंदः-स्तुति-उपगानवत्। ( कुशा [ स्त्री. ] = समिधर्थे )। कुशा यथा – " कुशा वानस्पत्याः " इत्यविशेषेण उपदेशे "औदुम्बर्याः" इति विशेषणात् औदुम्बर्या एव गृह्यन्ते। देवासुरच्छन्दसां अविशेषेण श्रुतौ " देवच्छन्दांसि पूर्वाणि " इति वाक्याद्देवच्छन्दसां पूर्वत्वम्। तदुक्तं पूर्वमीमांसायाम्।

( १६ ) सांपरायाधिकरणम्। सू. २७–२८

**२७. सांपराये तर्तव्याभावात् तथा ह्यन्ये।**

देवयानेन पथा प्रस्थितस्य " स आगच्छति विरजां नदीं, तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते " ( कौ १.४. ) ( The Upanishad text has धूनुते ) इति मार्गमध्ये सुकृतदुष्कृतहानिं पठन्ति कौषीतकिनः। तत्र प्रश्नः। किं यथाश्रुतं मार्गे एव सुकृतदुष्कृतहानिः अथवा देहादपसर्पणकाले। तत्र सिद्धान्तः – "सांपराये" मरणकाले एव। कुतः। नहि विदुषः संपरेतस्य विद्यया ब्रह्म संप्रेप्सतः अन्तराले सुकृतदुष्कृताभ्यां किंचित् प्राप्तव्यं तर्तव्यं वा अस्ति। अन्ये शाखिनः एवं च पठन्ति। ( छां ८.१३.१ पूर्वसूत्रे उद्धृतम्। )

R. considers sūtras 27–31 to be one Adhikarana. He interprets छन्दतः etc ( see सू २८ ) to mean that one can relinquish Karma either *at* or *after* death as he likes; since both ways there

is अर्थवत्त्व of the गति ( sūtra 29 ). The subtle body, says R., is not due to Karma but to विद्यामाहात्म्य of the Soul.

**२८. छन्दत उभयाविरोधात् ॥**

छन्दतः = इच्छातो वा अनुष्ठानं स्यात्। उभयश्रुत्योरविरोधस्तेन। Shankara interprets this to mean that since the कर्म ( अनुष्ठान ) by which one is free from सुकृत-दुष्कृत can be performed at one's will ( छंदतः ) only during worldly existence of the body, the हानि of सुकृत etc. must take place during life and not after death and so both the श्रुतिs ( छां & कौ ) can be reconciled, as well as reasoning.

( १७ ) गतेरर्थवत्त्वाधिकरणम्। सू. २९–३०

**२९. गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः।**

ननु सुकृतदुष्कृतहानसंनिधौ देवयानः पंथाः श्रूयते केषुचित् वाक्येषु, केषुचिन्न श्रूयते। तत्र प्रश्नः। देवयानगतिः सर्वेषां नित्या वैकल्पिकी वा। उच्यते। 'गतिः' श्रूयते, सा च क्वचित् अर्थवती, यत्र सगुणविद्यायां फलोपभोगः कश्चिदस्ति। निर्गुणविद्यायां तु ब्रह्मणः सारूप्यज्ञानमेव मोक्षः। तत्र गतेः न किंचित् प्रयोजनम्। अतः उभयथा = नित्यवैकल्पिकविभागेनैव गतेः अर्थवत्त्वम्। अन्यथा विरोधः। ( See note above ).

**३०. उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥**

उपपन्नश्चायं उभयथागतिभावः। कुतः। तस्याः गतेः लक्षणार्थः कारणार्थः प्रयोजनं वा उपलभ्यते। सकारणैव गतिर्भवितुमर्हति। नहि सम्यग्दर्शनवतां किंचिदपेक्षितं येन तत्र गतिः प्राप्स्यति। लोकेपि कारणापेक्षैव मार्गे गतिः। e.g. ग्रामं गन्तुम्। नारोग्यप्राप्त्यर्थं गतिर्लोके दृश्यते। तद्वदिहापि द्रष्टव्यम्।

( १८ ) अनियमाधिकरणम । सू. ३१

**३१. अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥**

ननु सगुणास्वपि विद्यासु कासुचित् ( e.g. पंचाग्निविद्यायाम् ) गतिः श्रूयते। कासुचिन्न यथा मधुविद्यायाम्। तत्र प्रश्नः। यासु श्रूयते तास्वेव गतिरन्यत्र वा। उच्यते। सर्वत्र सगुणविद्यासु गतिरवगन्तव्या। न कासुचिदित्येव नियमः। शब्दानुमानाभ्याम् = श्रुतिस्मृतिवचनेभ्यः। श्रुतिः " विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः॥ " ( शब्रा १०.५.४.१६ ); स्मृतिश्च " शुक्लकृष्णे गती " etc. ( गी ८.२६ ). R. reads सर्वेषाम् = all worshippers.

( १९ ) यावदधिकाराधिकरणम्। सू. ३२

**३२. यावदधिकारमवस्थितिराधिकारिकाणाम् ॥**

व्यासादयो सम्यग्दर्शिनः वर्तमानदेहपातानन्तरं देहान्तरधारिणः युगे युगे दृश्यन्ते। बाढम्। ते च वेदप्रवर्तनादिषु लोकस्थितिहेतुषु अधिकारेषु ईश्वरेण नियुक्ताः यावदधिकारं सम्यग्दर्शनेऽपि इहलोके अवतिष्ठन्ते इति न कोऽपि दोषः। ते च न केवलं जातिस्मराः किंतु य एव पूर्वजन्मनि त एव उत्तरजन्मनीति श्रूयते। So the Hiranyagarbha lives till प्रलय.

( २० ) अक्षरध्यधिकरणम। सू. ३३

**३३. अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥**

ननु " आनन्दादयः प्रधानस्य " ( ब्रसू ३.३.११ ) इत्यनेन समानासु सगुणविद्यासु गुणोपसंहारः प्रतिपादितः। अक्षरं ब्रह्म तु " तदक्षरं गार्गि ... अस्थूलमनणु " ( बृ ३.८.८ ) इति, तथा " तदक्षरं ... यत्तदद्रेश्यमग्राह्यम् " ( मुं १.१.५–६ ) इति च श्रूयते। तत्र प्रश्नः। किं अक्षरोपासनायां अपि निषेधात्मकानां गुणानां उपसंहारः कर्तव्यः वा न वा।

उच्यते। अवरोधः उपसंहारः कर्तव्यः। कुतः। समानो हि सर्वत्र ब्रह्मप्रतिपादनप्रकारः; विशेषनिराकरणप्रकारश्च। औपसदवत् इति दृष्टान्तः। यथा जामदग्न्येऽहीने पुरोडाशिनीषु उपसत्सु इष्टिषु उपदिष्टासु प्रदानमन्त्राणां उद्गातृवेदोत्पन्नानामपि अध्वर्युप्रदानके विनियोगः। तदुक्तं पूर्वमीमांसायाम् ( ३ ३.९ ) " गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः। "

( २१ ) इयदधिकरणम्। सू. ३४

**३४. इयदामननात्॥**

" द्वा सुपर्णा सयुजा " इति ( मुं ३.१.१; श्वे ४.६ ) अध्यात्माधिकारे आथर्वणिकाः श्वेताश्वतराश्च पठन्ति। तथा कठा अपि " ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ " इति ( क ३.१ )। तत्र प्रश्नः। किमत्र विद्यैकत्वं उत विद्यानानात्वम्। उच्यते। विद्यैकत्वमिति। कुतः। उभयोरपि अनयोः मन्त्रयोः इयत्तापरिच्छिन्नं = द्वित्वपरिच्छिन्नं वेद्यरूपं एकमेव दृश्यते। वेद्यैकत्वाद्विद्यैकत्वमिति।

( २२ ) अन्तराधिकरणम। सू. ३५–३६

**३५. अन्तरा भूतग्रामवत् स्वात्मनः।**

" यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः " इति ( बृ ३.४.१; ३.५.१ ) द्विवारं उषस्तकहोलप्रश्नयोः एकस्यामेव शाखायां श्रूयते। तयोः विद्यैकत्वं इति निश्चयः। कुतः। " एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा " ( श्वे ६.११ ) इत्यत्र आत्मनः सर्वभूतान्तरत्वस्य श्रूयमाणत्वात्। सर्वान्तरो हि स्वात्मा उभयत्र उभयप्रश्नयोरविशिष्टः।

**३६. अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्॥**

ननु उभयत्रापि विद्यैकत्वे आम्नानभेदः नोपपद्यते इति चेन्न। इतर-उपदेशवत्। यथा ताण्डिनां ( उपनिषदि ) षष्ठे प्रपाठके ( छां ६.८–१६ ) 'तत्त्वमसी'ति नवकृत्वोऽप्युपदेशे न विद्याभेदः भवितुमर्हति तथेहापि।

( २३ ) व्यतिहाराधिकरणम्। सू. ३७

**३७. व्यतिहारो विशिंषन्ति हीतरवत् ॥**

" तद्योहं सोसौ योसौ सोहम् " इति श्रूयते ( ऐआ २.२.४.६ )। तत्र संदेहः। किमिह व्यतिहारेण उभयरूपा मतिः कार्या उपासकैरथवा एकरूपा। उच्यते। व्यतिहारेण इह मिथः उभयरूपमतिकरणं विशिष्यते। इतरवत्। यथा इतरत्र सर्वात्मत्वप्रभृतयः गुणाः उपसंह्रियन्ते तथेहापि उभयरूपमतिसंग्रहः आध्यानाय कर्तव्यः। ( उपास्योपासकभिन्नदृष्टिरत्र विधीयते। )

( २४ ) सत्याद्यधिकरणम्। सू. ३८

**३८. सैव हि सत्यादयः ॥**

सत्यविद्याया एकत्वप्रतिपादनम्। बृहदारण्यके ( ५.४.१ ) " स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म " इति, तथा " तद्यत् तत्सत्यमसौ स आदित्यः " ( ५.५.२ ) इति आम्नातम्। तत्र विद्यैकत्वं, सैव विद्येत्यर्थः ग्राह्यः।

( २५ ) कामाद्यधिकाराधिकरणम्। सू. ३९

**३९. कामादीतरत्र तत्र चायतनादिभ्यः ॥**

दहराकाशहार्दाकाशयोः उपसंहारः उच्यते। दहराकाशं प्रस्तुत्य छान्दोग्ये ( ८.१.५ ) " एष आत्माऽपहतपाप्मा ... सत्यकामः सत्यसंकल्पः " इति श्रूयते। तथा बृ० ( ४.४.२२ ) " ... आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः " इति पठ्यते। तत्र एकैव विद्या एषा इति निर्णयः। ततश्च "कामादि" = सत्यकामादिगुणानां एकत्र उपसंहारः। कुतः। एकस्मिन् = हृदये आयतनं द्वयोः पठ्यते तस्मात्। आदिशब्देन 'सेतु'त्वादिकारणानि गृह्यन्ते।

( २६ ) आदराधिकरणम्। सू. ४०–४१

**४०. आदरादलोपः।**

छान्दोग्ये ( ५.१९.१ ) वैश्वानरविद्यायां " तद्यद् भक्तं ( अन्नं ) प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय

स्वाहे "ति पञ्च प्राणाहुतयो विहिताः। तत्र संदेहः। भोजनलोपे प्राणाहुति-लोपो वा अलोप इति। आदरात् अलोपः इति पूर्वपक्षः। तेन अन्नाभावे अपि अद्भिः वाऽन्येन द्रव्येणाहुतिकल्पनं इति पूर्वपक्षः।

According to R. this and the next sūtra supply reasons for not omitting कामादि qualities mentioned in the last sūtra, in the meditations; so 39–41 is one Adhikaraṇa.

**४१. उपस्थितेऽतस्तद्वचनात् ॥**

लोप एवेति सिद्धान्तः। कुतः। "यद् भक्तं प्रथममागच्छेत्" इत्यादिना उपस्थिते अन्ने एव "अतः" तस्मादन्नादेव प्राणाहुतीनां कार्यत्व-श्रवणात्।

( २७ ) तन्निर्धारणाधिकरणम्। सू. ४२

**४२. तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥**

Udgītha-vidyā is not a necessary part of the sacrifice. उद्गीथकर्मांगदेवतोपासनायाः अनियतत्वम्। "ओमित्येतदक्षरमुद्गीथमुपासीते "त्येवमादौ ( छां १.१.१ ) उद्गीथो-पासनायाः यज्ञांगत्वनिर्धारणेन नियमः वा अनियमः उच्यते। नैतन्नित्यं कर्मांगम्। कुतः। तद्दृष्टेः। "तेनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेद" ( छां १.१.१० ) इति अविदुषोऽपि क्रियाभ्यनुज्ञानात्। तथा च विद्योपेतस्य यज्ञकर्मणः पृथक् एव फलं ( कर्मफलसिद्ध्यप्रतिबन्धः कर्म-समृद्धिरतिशयविशेषः ) श्रूयते। तस्मात् विनैवोपासनां यज्ञकर्म सिध्यति। अतो न निर्धारणनियम इति।

N.B.—This is impertinent, in as much as it shews that उद्गीथविद्या or उद्गीथोपासना was not a necessary and hence an original part of the sacrificial rites. उद्गीथ is different from उद्गीथोपासना or

उद्गीथविद्या – a point which requires to be marked carefully. The उद्गीथ or singing the hymn is a necessary part of a sacrifice, but not the उद्गीथोपासना or उद्गीथविद्या.

२८. प्रदानाधिकरणम् । सू. ४३

**४३. प्रदानवदेव तदुक्तम् ॥**

संवर्गविद्यायां प्रोक्तौ वायुप्राणौ पृथग् एव तथा च विद्यानानात्वम्। "वायुर्वाव संवर्गः" ( छां ४.३.१ )। "वदिष्याम्येवाहामिति वाग्दध्रे" ( बृ १.५.२१ )। तत्र वागादीनामध्यात्मं प्राणः, अग्न्यादीनामाधिदैवतं वायुः इति अवधारितम्। तथापि न विद्यैक्यम्। कुतः। पृथगुपदेशात्। प्रदानवत् – यथा राज्याधिराज्यस्वराज्यगुणभेदेन इन्द्राय त्रिवारं आहुतिप्रदानं पूर्वमीमांसायां उक्तं तद्वत्।

( २९ ) लिंगभूयस्त्वाधिकरणम् । सू. ४४–५२

**४४. लिंगभूयस्त्वात्तद्धि बलीयस्तदपि।**

वाजसनेयिनोऽग्निरहस्ये ( शब्रा १०.५.३ १ ) मनोऽधिकृत्य "तत् षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीन् अर्कान् मनोमयान् मनश्चितः" इति मनश्चिदादयः अग्नयः श्रूयन्ते। तत्र संशयः। किमियं स्वतंत्रा विद्या उत कर्मांगमिति। उच्यते। स्वतंत्रा विद्या। कुतः। लिंगभूयस्त्वात्। लिंगं च प्रकरणाद् बलीय इति उक्तम् ( पूर्वमीमांसा ३.३.१४ "श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्।" referred to here ). "तद्यत् किं च इमानि भूतानि मनसा कल्पयन्ति" ( शब्रा १०.५.३.३ ) इति मनोनिर्मितत्वं लिंगम्। न कर्मांगं प्रत्यक्षं मनसा कल्प्यते; सिद्धमेव तत्। अतो मनश्चिदादीनां विद्यास्वातन्त्र्यमिति सिद्धान्तः।

**४५. पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्।**

शङ्क्यते – ननु द्वादशरात्रस्य दशमेऽहनि अविवाक्ये पृथिव्या पात्रेण

समुद्रस्य सोमस्य हवनं मानसिकं कल्प्यते तथा इहापि भवतु प्रकरणात् क्रियांगं मनश्चिदादीनाम्।

**४६. अतिदेशाच्च।**

"षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषां एकैक एव तावान् यावानसौ पूर्वः" (शब्रा १०.५.३.११) इति ३६,००० अग्निषु "तावा"निति पूर्वोक्तक्रियाङ्गस्य निर्देशः। तेनापि क्रियाङ्गत्वं ग्राह्यमिति शङ्क्यते। उत्तरं वदति। विद्यैवेति।

**४७. विद्यैव तु निर्धारणात्।**

विद्यैव। तथा "ते हैते विद्याचित एव ... विद्यया हैवैत एवंविदश्चिता भवन्ति" इति (शब्रा १०.५.३.१२)। 'एव' शब्देन विद्याया एव निर्धारणकरणात्।

**४८. दर्शनाच्च।**

दृश्यते चैषां स्वातन्त्र्ये ४४ सूत्रोक्तलिङ्गम्।

**४९. श्रुत्यादिबलीयस्त्वाच्च न बाधः।**

यस्मात् लिङ्गात् प्रकरणाच्च श्रुतिः बलीयसी तस्मात् ४७ सूत्रोक्तश्रुतेः मनश्चिदादीनां स्वतन्त्रविद्यात्वं एव स्वीकार्यम्। पूर्वपक्षस्तु प्रकरणलिङ्गाभ्यामेव साधितः। सिद्धान्तस्तु श्रुतिमूलकः।

**५०. अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्।**

"ते मनसैवाधीयन्त ... मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते" (शब्रा १०.५.३.३) इत्यादिसंपत्फलानुभवः श्रूयते। तस्मात् विज्ञानान्तरवत् = शाण्डिल्यविद्यान्तरवत् विद्यास्वातन्त्र्यम्। तदुक्तम् (पूमी ११.४.११ "क्रत्वर्थायामिति चेन्न वर्णसंयोगात्")। In the commentary of this, अवेष्टि connected with राजसूय is discussed and Ānandagiri gives a definition of राजा = a kshatriya prince.

**५१. न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः।**

'मानसवत्' इति या शङ्का ४५ सूत्रे उत्थापिता तस्या इदमुत्तरम्। मानसवत् सामान्यधर्मित्वेऽपि 'मृत्युवत्' भेदः। यथा "स वा एष एव मृत्युर्य एष एतस्मिन् मंडले पुरुषः" ( शब्रा १०.५.२.३ ), "अग्निर्वै मृत्युः" ( बृ ३.२.१० ) इति उभयत्रापि मृत्युशब्दश्रवणात् न सार्वात्मिकं अग्न्यादित्ययोः साम्यं तद्वत् इहापि। यथा च "असौ वाव लोको गौतमाग्निः" ( छां ५.४.१ ) इत्यत्र लोकस्य अग्निभावापत्तिः। तथेहापि।

**५२. परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥**

परस्तात् उत्तरग्रन्थे विद्यान्तरवर्णने अपि शब्दस्य श्रुतेः केवलविद्याविधित्वं श्रूयते भूयः। तस्मादिहापि तथैव विद्यास्वातन्त्र्यं सिध्यति।

( ३० ) ऐकात्म्याधिकरणम। सू. ५३–५४

**५३. एक आत्मनः शरीरे भावात्।**

एके लोकायतिकाः आत्मनः शरीरे भावात् शरीरव्यतिरेकेण अनुपलब्धत्वात् शरीराव्यतिरिक्तत्वमाहुः। इति पूर्वपक्षः।

R. thinks that these two sūtras (53–54) do not deal with the large question, but only so far as उपासना is concerned, the Soul should be viewed as separate from the body.

**५४. व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्॥**

यथा देहभावे एव आत्मोपलब्धिः तथा देहे विद्यमानेऽपि तस्य आत्मनः अभावः दृश्यते मृतादौ मूर्च्छितादौ च। तस्मात् व्यतिरेक एव देहात्मनोः। Here Shankara quotes शबर and उपवर्ष, and the usual argument "cogito ergo sum" as well as the difference between विषय and विषयिन्.

N. B. – These are the only sūtras which

prove the existence of the Soul, whether in the पूर्व or the उत्तर Mimāṁsā.

३१. अङ्गावबद्धाधिकरणम् । सू. ५५–५६

**५५. अङ्गावबद्धास्तु न शाखासुहि प्रतिवेदम् ।**

“ ओमित्येतदक्षरमुद्गीथमुपासीत ” ( छां १.१.१ ), “ लोकेषु पञ्चविधं सामोपासीत ” ( छां २ २.१ ), “ उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी ” ( ऐआ २.१.२ ), “ अयं वाव लोक एषोग्निश्चितः ” ( शब्रा १०.५.४.१ ) इत्येवं उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः ( विज्ञानानि ) प्रतिवेदं शाखाभेदेषु विहिताः। ते च न प्रतिवेदं भिन्ना इति सिद्धान्त्यते। कुतः। उद्गीथादिश्रुत्यविशेषात्। तस्मात् प्रतिशाखं स्वरादिभेदेऽपि अङ्गावबद्धाः सर्वे प्रत्ययाः सर्वत्र स्युः। तथा च ऐतरेयवाक्योपासनायां पृथिव्यादिदृष्टेः कौषीतक्यां समानत्वं बोध्यम्।

**५६. मंत्रादिवद्वाऽविरोधः॥**

यथा च मंत्राणां कर्मणां गुणानां च शाखान्तरोत्पन्नानां शाखान्तरे उपसंग्रहो दृश्यते तद्वत्। तथाहि “ कुटरुरसि ” ( मैसं १ १.६ ) इति मंत्रः शाखान्तरे तादृङ्मंत्राभावात् तण्डुलपेषणार्थं अश्मादानवेलायां शाखान्तरे गृह्यते।

( ३२ ) भूमज्यायस्त्वाधिकरणम् । सू. ५७

**५७. भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति॥**

विराड्रूपवैश्वानरस्य कृत्स्नत्वेन ध्येयत्वं न तदंशस्य। छान्दोग्ये ( ५.१२.१ ) “ औपमन्यव कं त्वं आत्मानं उपास्से ” इत्युपक्रम्य “ एष वै सुतेजाः आत्मा वैश्वानरः ” इति व्यस्तम्। ततः “ मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ ” ( छां ५.१८.२ ) इति समस्तस्य वैश्वानरस्योपासनं दृश्यते। तत्र न उभयोपासनं किंतु समस्तस्यैवेति सिद्धान्तः। कुतः। भूम्नः पदार्थोपचयात्म-

कस्य ज्यायस्त्वात्। यथा ( क्रतुषु ) दर्शपूर्णमासप्रभृतिषु सामस्त्येन सांग-प्रधानप्रयोगः तद्वत्। दर्शनाच्च। पूर्वापरग्रंथालोचनादित्यर्थः।

( ३३ ) शब्दादिभेदाधिकरणम्। सू. ५८

**५८. नाना शब्दादिभेदात्॥**

ननु यथा सुतेजःप्रभृतीनां समस्तोपासनं ज्याय इति पूर्वसूत्रे उक्तं तथा भिन्नभिन्नविद्यानां एकत्रोपासनं ज्यायो भवितुमर्हति इति प्राप्ते। उच्यते। न। नाना एव विद्याः भवितुमर्हन्ति। कुतः वेद्यैकत्वेऽपि शब्दभेदात्। 'वेद' "उपासीत" "क्रतुं कुर्वीत" इत्यादिशब्दभेदः दृश्यते; "शब्दान्तरे कर्मभेदः ..." ( जैसू २.२.१ )। "सर्ववेदान्तप्रत्ययम् ..." ( ब्रसू ३.३.१ ) इत्यस्यायं प्रपञ्चः।

( ३४. ) विकल्पाधिकरणम। सू. ५९

**५९. विकल्पोऽविशिष्टफलत्वात्॥**

भवतु विद्यानानात्वम्। परं किमासां इच्छया समुच्चयः विकल्पो वेति विचार्यते। तत्र सिद्धान्तः विकल्प इति। कुतः। अविशिष्टं चासां फलं उपास्यविषयसाक्षात्करणम्। अतः एकेनोपासनेन साक्षात्कृते ईश्वरे द्वितीयस्य अनर्थकत्वम्।

( ३५ ) काम्याधिकरणम। सू. ६०

**६०. काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्॥**

यासु पुनर्विद्यासु काम्यफलं दृश्यते न साक्षात्कारफलं ताः यथा-कामं समुच्चीयेरन् न वा। काम्यफलं यथा "स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति" ( छां ३.१५.२ ) इति पुत्रमरणनिमित्तरोदनं न लभते इति फलं दर्शितम्। तच्च काम्यम्।

( ३६ ) यथाश्रयभावाधिकरणम्। सू. ६१–६६

**६१. अंगेषु यथाश्रयभावः।**

कर्मांगेषु उद्गीथादिषु ये ( सू ५५ ) वेदत्रयविहिताः प्रत्ययाः आश्रिताः

तेषां यथाश्रयभावत्वेन समुच्चयः इति पूर्वपक्षः। ते च यस्य उद्गीथस्य अंगानि तद्वत् समुच्चयक्रियां अर्हन्ति। आश्रयतन्त्रत्वात्तेषाम्।

N.B.– See sūtra 55 supra "अंगावबद्धास्तु न शाखासु हि प्रतिवेदम्"; cf. also supra 42.

**६२. शिष्टेश्च।**

शिष्टिः शासनम्। नात्र विशेषं किंचित् शासनम्। बाढम्। तथापि तदाश्रयाणां स्तोत्रादीनां यच्छासनं तदेव आश्रितानां अवयवानां ग्राह्यम्।

**६३. समाहारात्।**

"होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरति" (छां १.५.५) इति उद्गातृदुरुक्तं होता प्रतिसंदधातीति श्रवणात्। समाहारः = समताकरणम्, correction. उद्गीथस्य (होतुः) प्रणवस्य ऐक्यं प्रतीयते। तस्मात् समुच्चय एवात्रापेक्षित इति पूर्वपक्षः।

**६४. गुणसाधारणश्रुतेश्च।**

"तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयति (अध्वर्युः), ओमिति शंसति (होता), ओमित्युद्गायति (उद्गाता)" (छां १.१.९) इति वेदत्रयसाधारण्यश्रवणात्। The ओम् of the Ṛk is उद्गीथ of the Sāman.

**६५. न वा तत्सहभावाश्रुतेः।**

सिद्धान्तः न समुच्चयनियम इति। कुतः। यद्यपि त्रिवेदीविहितानां अंगानां स्तोत्रादीनां सहभावः श्रूयते "स्तोत्रमनुशंसति प्रस्तोतः साम गाय होतरेतद्यज" (तैसं ३.१.२.४) इत्यादिना, तथापि नैवमुपासनानां सहभावश्रुतिरस्ति।

**६६. दर्शनाच्च॥**

श्रुतिरसहभावं प्रत्ययानां दर्शयति। यथा "एवंविद्ध ह वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" (छां ४.१७.१०) इति

ब्रह्मणैव ऋत्विजा इतरेषां परिपाल्यत्वश्रवणात्। तस्मात् यथाकामं उपासनानां समुच्चयो विकल्पो वा इति सिद्धान्तः। यथा काम्यानां ( सूत्र ६० ) याथाकाम्यं उक्तं तद्वदेव उद्गीथप्रत्ययानाम्।

N. B. – Some उद्गीथोपासनाs are different, ( see sūtras 6–9 ); e. g. as those of छान्दोग्य and काण्व. But उद्गीथोपासना itself is not a necessary part of a sacrifice ( see sūtra 42 ). But where उद्गीथोपासना is performed, the subordinate meditations of the three Vedas are to be joined ( see sūtra 55 ). Now the Adhikaraṇa ( sūtra 61 ff ) says that these subordinate meditations of the three Vedas may or may not be joined, even when the उद्गीथोपासनाs are different; because the subordinate meditations do not follow the principal rite as a matter of necessity. That seems to be the meaning to be deduced from the four Adhikaranas ( sūtras – 6–9; 42; 55–56 & 61–66 ).

॥ इति तृतीयाध्यायस्य तृतीयपादः ॥

## ॥ अथ तृतीयाध्यायस्य चतुर्थपादः ॥

( १ ) पुरुषार्थाधिकरणम् । सू. १–१७

**१. पुरुषार्थोऽतः शब्दादिति बादरायणः ।**

अतः अस्माद्वेदान्तज्ञानात् पुरुषार्थः सिध्यति स्वातन्त्र्येणेति बादरायणः मन्यते । वेदान्तज्ञानं न केवलं कर्माङ्गं किन्तु स्वातन्त्र्येण मोक्षफलदायकम् । कुतः । शब्दात् । "तरति शोकमात्मवित्" (छां ७.१.३); "ब्रह्मविदाप्नोति परम्" (तै २.१); "एतावदरे खल्वमृतत्वम्" (बृ ४.५.१५) इत्यादिश्रवणात् । ( सिद्धान्तोऽयम् ) ।

**२. शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ।**

आत्मनः कर्तृत्वेन यज्ञादिक्रियाशेषत्वात् आत्मज्ञानं क्रियाङ्गम् । पुरुषार्थश्रुतिस्तु अर्थवादः यथा अन्येषु संस्कारद्रव्येषु ( e.g. "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" तैसं ३.५.७.२ )। इति जैमिनिः मन्यते । शङ्केयम् ।

**३. आचारदर्शनात् ।**

शङ्कापरिपोषोऽयम् । "जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे" (बृ ३.१.१), "यक्ष्यमाणो वै भगवन्तोऽहमास्मि" (छां ५.११.५) इत्याचारदर्शनात् । Here Shankara quotes the maxim: अर्के चेन्मधु विंदेत किमर्थं पर्वतं व्रजेत् । and Ānandagiri explains: अर्के = सामीप्ये.

**४. तच्छ्रुतेः ।**

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" (छां १.१.१०) इति विद्यायाः कर्मशेषत्वश्रवणात् । कर्माङ्गत्वमेव वेदान्तविद्यायाः ।

**५. समन्वारम्भणात् ।**

"तं विद्याकर्मणी समन्वारभेते" (बृ ४.४.२) तं परलोकं व्रजन्तं उभे विद्याकर्मणी समनुगच्छतः इति सहकारित्वदर्शनान्न स्वातन्त्र्यं विद्यायाः।

**६. तद्वतो विधानात्।**

"आचार्यकुलाद्वेदमधीत्य ... अभिसमावृत्य कुटुम्बे ..." (छां ८.१५.१) इत्यादिना विद्यावतः एव गार्हस्थ्यादिकर्मान्तरश्रवणात् न विद्यायाः स्वातन्त्र्यम्।

**७. नियमाच्च।**

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥" (ई २) इत्यादिकर्मकरणनियमाच्च विद्यायाः कर्मशेषत्वं न स्वातन्त्र्यमिति पूर्वपक्षहेतवः। अधुना पुनः सिद्धान्तं वदति।

**८. अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्।**

तु-शब्दः पूर्वपक्षं व्यावर्तयति। न विद्यायाः कर्माङ्गत्वम्। यद् बादरायणस्य मतं प्रथमसूक्ते उक्तं तत्तथैव भवति। कुतः। अधिकोपदेशात्। यः कर्ता कर्माङ्गं नासौ वेदान्तवेद्यः किंतु तस्मादधिकः असंसारी कर्तृत्वादिधर्मरहितः "यः सर्वज्ञः सर्वविद्" (मुं १.१.९), "एतस्य वा अक्षरस्य प्रशासने गार्गि" (बृ ३.८.९) इत्यादिश्रुतिषु उपदिश्यते। अतो वेदान्तवेद्यः न संसारी किंतु तस्मादधिकः। अतश्च विद्यायाः न कर्माङ्गत्वम्।

**९. तुल्यं तु दर्शनम्।**

यदुक्त"माचारदर्शनात्" (सू ३) तत् परिह्रियते "एतद्ध स्म वै तद्विद्वांसः आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" (ऐआ ३.२.६), "एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः" (कौ २.५) इत्यादिश्रुतिभ्यः अकर्मशेषत्वेऽपि आचारदर्शनं तुल्यं भवति।

N. B. – This seems to be the siddhānta here. Cf. ब्रसू ३.४.३२ ' विहितत्वाच्चाश्रमकर्मापि । '

**१०. असार्वत्रिकी ।**

" यदेव विद्यया करोती"ति श्रुतिः ( सू ४ ) न सर्वविद्याविषया। किन्तु प्रकृतोद्गीथविद्याविषया । अतो न दोषः ।

**११. विभागः शतवत् ।**

" विद्याकर्मणी समन्वारभेते " इति ( सू ५ ) तु विभज्य ग्राह्यम् । ' कंचित् परलोकं गच्छन्तं विद्या, कंचित् कर्म समनुगच्छति ' इति विभागेनान्वयः । यथा ' शतमेभ्यो देही 'त्युक्ते एकस्मै ३०, एकस्मै ६०, एकस्मै १० दीयन्ते तद्वत् ।

**१२. अध्ययनमात्रवतः ।**

"आचार्यकुलाद्वेदमधीत्य" ( सू ६ ) इत्यादिश्रुतिस्तु वेदाध्ययनमात्रवतः ( न विद्यावतः ) गार्हस्थ्यकर्माचरणं ब्रवीति । अतो न दोषः ।

**१३. नाविशेषात् ।**

" कुर्वन्नेवेह कर्माणि " इति नियमे ( सू ७ ) न विदुषः इति विशेषोऽस्ति । अविशेषेणायं नियमः श्रूयते । अतो न अस्य विद्याविषयत्वं ग्राह्यम् ।

**१४. स्तुतयेऽनुमतिर्वा ।**

ननु प्रकरणात् विद्वद्विषयः एवायं नियम इति चेत् । विद्यास्तुतये कर्मानुज्ञानार्थ एवायमिति द्रष्टव्यम् । कुर्वत्यपि विदुषि कर्म न लेपाय भवति इत्यर्थः । न 'कुरु' इति नियमः ।

**१५. कामकारेण चैके ।**

'कामकारेणे'ति वाजसनेयिनां श्रुतिर्भवति । एके विद्वांसः प्रत्यक्षीकृतविद्याफलाः गार्हस्थ्यधर्मादिषु प्रयोजनाभावं पश्यन्ति । यथा " एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां

नोऽयमात्माऽयं लोक इति" "( अपरोक्ष इति शेषः ) ( बृ ४.४.२२ ); अतोऽपि न विद्यायाः कर्मशेषत्वम्।

N. B. – I think this sūtra gives a third alternative. Jaimini and Bādarāyaṇa advocate one doctrine each; but some think that the adoption depends on one's choice. That is, they consider both paths as optional.

**१६. उपमर्दं च।**

"यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेत" ( बृ. २.४.१४ ) इत्यादिना अविद्याकृतस्य प्रपञ्चस्य स्वरूपोपमर्दं आमनन्ति। तस्मान्न विद्यायाः कर्मशेषत्वमिति सिद्धान्तः।

N. B. – When both the paths are considered as optional and of equal value, the effect of Karma in the Karmayoga is said to be destroyed by Jñāna.

**१७. ऊर्ध्वरेतःसु च शब्दे हि॥**

गार्हस्थ्यं विना ब्रह्मचर्यादेव ये प्रव्रजन्ति ते ऊर्ध्वरेतसः परिव्राजः। न तेषामग्निहोत्रादीनि वैदिकानि कर्माणि सन्ति। तेऽपि विद्यया पुरुषार्थं लभन्ते इति श्रूयते। तस्मान्न विद्यायाः कर्मांगत्वं संभवति। ऊर्ध्वरेतसां तदसंभवात्। यथा छान्दोग्ये "त्रयो धर्मस्कन्धाः" इत्युपक्रम्य "यज्ञोऽध्ययनं दानमिति प्रथमः ( गृहस्थः ), तप एव द्वितीयः ( वानप्रस्थः ), ब्रह्मचार्याचार्यकुलवासी तृतीयः ( ब्रह्मचारी ) अत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति" इति परामर्शपूर्वकं ( त्रयाणां ) आश्रमाणां 'पुण्यलोक'फलत्वं संकीर्त्य "ब्रह्मसंस्थोऽमृतत्वमेति" ( परिव्राट् ) ( छां २.२३.२ ) इति ब्रह्मसंस्थता ( परिव्राजः ) स्तूयते। तस्मात् ऊर्ध्वरेतसां ब्रह्मप्राप्तिः। अतश्च न विद्यायाः कर्माङ्गत्वम्।

N. B. – ( This sūtra forms a link, as it were, between the first and the second Adhikaraṇa ).

( २ ) परामर्शाधिकरणम् । सू. १८–२०

**१८. परामर्शं जैमिनिरचोदना चापवदति हि ।**

उक्तश्रुतौ जैमिनिराचार्यः आश्रमाणां परामर्शं मन्यते न चोदना । अतो नैष विधिः ऊर्ध्वरेतोविषयः संभवितुमर्हति । अपवादश्च श्रूयते । यथा "वीरहा वा एष देवानां योऽग्निमुद्वासयते" (तैसं १.५.२.१), "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" (तै १.११), "नापुत्रस्य लोकोऽस्ति ..." (ऐब्रा ७.१३) इत्यादिश्रुतिभिः गार्हस्थ्यस्यावश्यानुष्ठानदर्शनात् । तस्मान्नोक्तश्रुतौ परिव्राजः परामर्शः इति पूर्वपक्षः । न च ऊर्ध्वरेतसः आश्रमाः सिध्यन्ति ।

**१९. अनुष्ठेयं बादरायणः साम्यश्रुतेः ।**

गार्हस्थ्यादिवत् आश्रमान्तरं ऊर्ध्वरेतस्त्वं = पारिव्राज्यं अनुष्ठेयं बादरायणः मन्यते । कुतः । साम्यश्रुतेः । यथा "त्रयो धर्मस्कन्धाः" इत्यत्र श्रुत्यन्तरविहितः गृहस्थाश्रमः परामृश्यते **तत्समं** = तद्वत् आश्रमान्तरस्य पारिव्राज्यस्यापि परामर्शो वेदितव्यः । उभयोः साम्यात् । एवं परामर्शेऽभ्युपेतेऽपि अनुष्ठेयं पारिव्राज्यं गार्हस्थवत् परामृष्टं भवतीति शक्यते वक्तुम् । यथा उपवीतपरवाक्ये निवीनप्राचीनावीतयोः परामर्शः ।

N. B. – This is a reply to sūtra 8. Taking for granted that परामर्श & not विधि is implied in the छान्दोग्यश्रुति, we must interpret it to include the परामर्श of ऊर्ध्वरेतः, just as गार्हस्थ is taken to be परामृष्ट. But Bādarāyaṇa goes further and regards it a विधि in the next sūtra.

**२०. विधिर्वा धारणवत् ॥**

अथवा विधिरेवायं परिव्राज आश्रमस्य मन्तव्यः। कुतः। धारणवत्। यथा "अधस्तात्समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति" (source?) इत्यत्र उपरिधारणविधिः। अपूर्वत्वात् = विध्यन्तरस्यादर्शनात् प्रतीयते "विधिस्त्वपूर्वत्वात् स्यात्" (पूमी ३.४.३) इति राद्धान्तितं पूर्वमीमांसायाम्। तद्वत् इहापि बोद्धव्यम्। सति परामर्शे तु गतिर्दर्शिता पूर्वसूत्रे। तथापि अपूर्वत्वाद्विधिरेवायमिति बोद्धव्यामित्याख्यातुमिदं सूत्रम्। जाबालश्रुतिमनपेक्ष्यायं विचारः। श्रुतिस्तु भवत्येव "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा" इति (जाबा ४).

N. B.—In the भाष्य on this Shankara says that गार्हस्थ्य is not fit to acquire ब्रह्मसंस्थत्वं owing to the various miscellaneous duties enjoined on a गृहस्थ. But परिव्राट् alone can accomplish it.

(३) स्तुतिमात्राधिकरणम। सू. २१—२२

**२१. स्तुतिमात्रमुपादानमिति चेन्नापूर्वत्वात्।**

ननु "रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" (छां १.१.३), "इयमेवर्गग्निः साम" (छां १.६.१), "अयं वाव लोक एषोऽग्निश्चितः" (शब्रा १०.५.४.१), "तदिदमेवोक्थमियमेव पृथिवी" (ऐआ २.१.२) इत्येवंजातीयकाः श्रुतयः किं उद्गीथादेः स्तुत्यर्थाः आहोस्वित् उपासनाविध्यर्थाः। उपासनाविध्यर्थाः एव न स्तुत्यर्था इति सिद्धान्तः। कुतः। यद्यपि कर्माङ्गान्युपादाय उद्गीथादीनां श्रवणं दृश्यते तथापि न तासां स्तुत्यर्थत्वम्। अपूर्वत्वात्। विध्यर्थतायां हि अपूर्वः अर्थः विहितो भवति। स्तुत्यर्थतायां तु आनर्थक्यं स्यात्।

**२२. भावशब्दाच्च॥**

"सामोपासीत" (छां २.२.१), "अहमुक्थमस्मीति विद्यात्" (ऐआ २.१.२) इत्यादिलिङ्गादिविधिशब्दानां (भावशब्दानां) श्रूय-

माणत्वात्। "कुर्यात् क्रियेत कर्तव्यं भवेत्स्यादिति पंचमम्। एतत्स्यात् सर्ववेदेषु नियतं विधिलक्षणम्॥" इति न्यायविदां स्मरणात् च।

( ४ ) पारिप्लवाधिकरणम। सू. २३–२४

**२३. पारिप्लवार्था इति चेन्न विशेषितत्वात्।**

"अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च" ( बृ ४.५.१ ), "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम" ( कौ ३.१ ); "जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस" ( छां ४.१.१ ) इत्येवमादयः वेदान्तेषु कथाः दृश्यन्ते। तानि आख्यानानि किं पारिप्लवार्थानि – उत संनिहितविद्याप्रतिपत्त्यर्थानि – इति संदेहः। पारिप्लवप्रयोगो नाम अश्वमेधे पुत्रामात्यपरिवृताय राज्ञे नानाविधाख्यानकथनम्। तानि आख्यानानि "मनुर्वैवस्वतो राजा" ( शब्रा १३.४.३.३ ) इत्येवमादीनि शतपथे विशेष्यन्ते। विशेषितत्वाच्च तेषां वेदान्तेषु श्रुतानि आख्यानानि न पारिप्लवार्थे इति निश्चीयते।

**२४. तथा चैकवाक्यतोपबन्धात्॥**

असति च पारिप्लवार्थे आख्यानानां संनिहितवेदान्तविद्याप्रतिपत्तिदार्ढ्यकरणोपयोगित्वमेव न्याय्यम्। एकवाक्यतोपबन्धात्। विद्यादृढीकरणेनैव एकवाक्यता दृश्यते इत्यर्थः। तथा च मैत्रेयीकथायां "आत्मा वा अरे द्रष्टव्यः" ( बृ २.४.५ ) इति विद्यायाः दृढीकरणम्।

( २५ ) अग्नीधनाद्यधिकरणम। सू. २५

**२५. अत एव चाग्नींधनाद्यनपेक्षा॥**

एवं विद्यायाः स्वातन्त्र्यं न कर्मांगत्वमिति सिद्धम्। अत एव = विद्यायाः स्वातन्त्र्यादित्यर्थः। न विद्यायां अग्नींधनादीनां अपेक्षा विद्यते। विनैव कर्मणा विद्यायाः साध्यत्वात्।

( ६ ) सर्वापेक्षाधिकरणम्। सू. २६–२७

**२६. सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्।**

पूर्वसूत्रे आश्रमकर्मणामनपेक्षत्व विद्याया उक्तम्। तच्च न अत्यन्तम् इति अधुना दर्शयति। "तमेतं वेदानुवचनेन (वेदाभ्यसनेन) ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन (अनशनेन)" (बृ ४.४.२२) इति यज्ञादिश्रुतिः विद्यासाधनभूतानि वेदाध्ययन-यज्ञ-दानादिकर्माणि दर्शयति। अतो यज्ञादिकर्मभिरपि विद्याप्राप्तिरिति सिध्यति। न चैवैतेन पूर्वसूत्रविरोधः शङ्क्यः! उभयथापि विद्योत्पत्तिदर्शनात्। यथा अश्वः योग्यतापेक्षया लांगलकर्माणि अथवा रथे नियुज्यते तद्वदयं भेदोधिकारभेदात्।

**२७. शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात्॥**

यज्ञाद्यनपेक्षायामपि शमदमाद्युपेतत्वं अवश्यामिति दर्शयति "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति" (बृ ४.४.२३) इति श्रुत्या विद्यासाधनत्वेन शमदमादीनां विधित्वेनावश्यं अनुष्टेयत्वदर्शनात्। 'पश्यति' इत्यत्र माध्यंदिनानां 'पश्येत्' इति विधित्वेन पाठश्च दृश्यते (शब्रा १४.७.२.२८)। शमदमादि तु विद्यायाः अङ्गम्

(७) सर्वान्नानुमत्यधिकरणम। सू. २८—३१

**२८. सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्।**

प्राणसंवादे श्रूयते "न ह वा एवंविदि किंचनानन्नं भवति" (छां ५.२.१)। किमनेन सर्वदा सर्वान्नानुमतिः विधीयते इति प्रश्नः। न। प्राणात्यये एवेयं अनुमतिः न सर्वत्र कुतः। तथा दर्शनात्। "मटचीहतेषु कुरुषु" (छां १.१०.१) चाक्रायणः सामिखादितान् (कुल्माषान्) भक्षयित्वा उदपानं न कृतवान्। हेतुत्वेन चोक्तवान् "न वा अजीविष्यमिमानखादन्; कामो म उदपानम्" इति (छां १.१०.४) निदर्शनात्।

**२९. अबाधाच्च।**

एवं च सति "आहारशुद्धौ सत्त्वशुद्धिः" (छां ७.२६.२) इति भक्ष्याभक्ष्यशास्त्रमविरुद्धं भविष्यति।

**३०. अपि च स्मर्यते ।**

" जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ " इति ( मनु १०.१०४ ) स्मृतेश्च ।

**३१. शब्दश्चातोऽकामकार ।**

अतश्च कामकारनिवृत्तिप्रयोजनः अनन्नस्य प्रतिषेधकः शब्दः श्रुतिः काठकानां संहितायां भवति । " तस्माद् ब्राह्मणः सुरां न पिबेत् " इति । तस्मात् " न ह वा एवंविदि " ( छां ५.२.१ ) इत्यादिपूर्वोक्ताः श्रुतयः अर्थवादपरा एव ग्राह्याः ।

( ८ ) आश्रमकर्माधिकरणम् । सू. ३२–३५

**३२. विहितत्वाच्चाश्रमकर्मापि ।**

यद्यपि आश्रमकर्मणां विद्यासाधनत्वं दर्शितं 'सर्वापेक्षा चे'त्यत्र ( सू २६ ) तथापि विद्यामनिच्छतः आश्रममात्रानिष्ठस्यापि अमुमुक्षोरपि कर्तव्यान्येव नित्यानि आश्रमकर्माणि । कुतः । विहितत्वात्तेषाम् ।

**३३. सहकारित्वेन च ।**

एवं सति विद्यासाधनत्वमेषां न स्यादिति चेन्न । विद्यासहकारीणि चैतानि स्युः । कुतः । विहितत्वादेव हेतोः । " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति " ( बृ ४.४.२२ ) इत्यादिना विहितत्वात् । यथापूर्वं उक्तम् ।

**३४. सर्वथापि त एवोभयलिंगात् ।**

"सर्वथाऽपि" = उभयपक्षेऽपि आश्रमनित्यकर्मत्वपक्षे तथा विद्यासहकारिपक्षेऽपि " त एव " आश्रमधर्मा अनुष्ठेयाः । "उभयलिंगात्" = श्रुतिस्मृतिलिंगात् । श्रुतिः पूर्वमुक्ता ( बृ. ४.४.२२ ) । " अनाश्रितः कर्मफलं कार्यं कर्म करोति यः " इति स्मृत्या ( गी ६.१ ) अनभिसंधाय फलं अनुष्ठितं कर्म ज्ञानसाधनं भवतीति प्रपंचितत्वात् ।

**३५. अनभिभवं च दर्शयति ॥**

ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिभिः क्लेशैः अनभिभवं अपराभूतत्वं

च श्रुतिर्दर्शयति । तस्माद् विद्यासहकारित्वमेषामुपगन्तव्यम् । श्रुतिः यथा “ एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते ” ( छां ८.५.३ ).

( ९ ) विधुराधिकरणम् । सू. ३६–३९

**३६. अंतरा चापि तु तद्दृष्टेः ।**

आश्रमकर्मणा विनाऽपि विद्यासंभवः विद्योत्पत्तिर्दृश्यते । रैक्व-वाचक्नवीप्रभृतीनां अनाश्रमित्वेऽपि विद्योत्पत्तिदर्शनात् ।

**३७. अपि च स्मर्यते ।**

संवर्तप्रभृतीनां विधुरादीनां इतिहासे पुराणे विद्योत्पत्तिः स्मर्यते ।

**३८. विशेषानुग्रहश्च ।**

पुरुषमात्रसंबन्धिभिः जपोपवासदेवताराधनादिभिः धर्मविशेषैः इहजन्मानुष्ठितैः जन्मान्तरानुष्ठितैर्वा धर्मविशेषैः विद्यायाः अनुग्रहो भवति । “ अनेकजन्मसंसिद्धः ततो याति परां गतिम् । ” इति स्मृतेः ( गी ६.४५ ).

**३९. अतस्त्वितरज्ज्यायो लिंगाच्च ।**

अतः = अंतरालवर्तित्वात् इतरत् आश्रमवर्तित्वं ज्यायः विद्या-साधनं भवति । “ अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ” इति लिंगात् ।

( १० ) तद्भूताधिकरणम् । सू. ४०

**४०. तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ।**

सन्ति ऊर्ध्वरेतस आश्रमा इति दर्शितम् । तद्भूतः = ऊर्ध्वरेतो-भावमापन्नः न कथंचित् अतद्भावं = आश्रमावरोहं गन्तुमर्हति । कुतः । नियमात् । अरण्यमियात् इति नियमो दृश्यते न पुनरेयात् इति उपनिषत् । ( शांभा quotes ‘ अरण्यमियादिति पदं ततो न पुनरेयादित्युप-निषत् ’ ) “ आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ” इति स्मृतेश्च (मभा CE १२.२२६.४ ) । न चैवमाचाराः शिष्टा विद्यन्ते ।“जैमिनेरपि” इत्यत्र ‘अपि’ शब्देन बादरायणस्यापि अत्र संमतिरिति दर्शयति ।

( ११ ) आधिकारिकाधिकरणम् । सू. ४१–४२

**४१. न चाधिकारिकमपि पतनानुमानात्तदयोगात्।**

यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत क्षिप्तरेताः भवेत् तदा तस्य न प्रायश्चित्तम्। यद्यपि " ब्रह्मचार्यवकीर्णी नैर्ऋतं पशुं ( गर्दभं ) आलभेत " ( आपस्तंबधर्मसूत्र १.९.२६.८ ) ( पारस्करगृह्यसूत्र ३.१२.२ ) इति प्रायश्चित्तमाधिकृतं तथापि न तन्नैष्ठिकस्य। कुतः। पतनानुमानात् = " आरूढो नैष्ठिक धर्मे यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा ॥ " इति पतन ( पातक ) स्मरणात्। उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावात् भवति " नैर्ऋतं पशुमालभेत " इति प्रायश्चित्तम्। न पुनः नैष्ठिकस्य। एतन्महापातकं अतो न शुद्धिः।

**४२. उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥**

एके पुनः इदं 'उप'पातकं ( उपपूर्वं पातकम् ) मन्यन्ते। प्रायश्चित्तस्य च भावमिच्छन्ति। कुतः। महापातकेषु अस्य अपरिगणनात्। 'अशनवत्' = यथा ब्रह्मचारिणो मधुमांसाशने व्रतलोपः पुनः संस्कारश्चैवम्। तदुक्तं पूर्वमीमांसायाम् ( १.३.८ ... " समा विप्रतिपत्तिःस्यात्। " १.३.९ " शास्त्रस्था वा तन्निमित्तत्वात्। " )

( १२ ) बहिरधिकरणम्। सू. ४३

**४३. बहिस्तूभयथापि स्मृतेराचाराच्च ॥**

भवतु उपपातकं वा महापातकम्। प्रायश्चित्तं अप्रायश्चित्तं वा। उभयपक्षे शिष्टाचारात् स्मृतेश्च नावकीर्णी व्यवहार्यो भवति। " आरूढपतितं विप्रं ... स्पृष्ट्वा चांद्रायणं चरेत्। " इत्यादिस्मरणात्। शिष्टाचारोऽपि तथैव।

( १३ ) स्वाम्यधिकरणम्। सू. ४४–४६

**४४. स्वामिनः फलश्रुतेरित्यात्रेयः।**

उद्गीथोपासनानि किं यजमानकर्माणि उत ऋत्विक्कर्माणि। उच्यते। यजमानकर्माणीति आत्रेयः आचार्यो मन्यते। कुतः। " वर्षति हास्मै वर्षयति

ह्” इत्यादिफलश्रवणात् ( छां २.३.२ )। फलं तु स्वामिगामि यजमानगामीति न्याय्यम्। तस्य प्रयोगेऽधिकृतत्वात्।

**४५. आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते।**

ऋत्विक्कर्माण्येतानि इति औडुलोमिः। ऋत्विक्तु यज्ञकर्मणे दक्षिणादानेन परिक्रीयते। अतः तत्कृतकर्मफलं यजमानमभ्युपैति।

**४६. श्रुतेश्च॥**

युक्तं चैतत्। “ यां वै कांचन यज्ञ ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासते ” ( शब्रा १.३.१.२६ ) इति श्रुतेः। “ तस्मादु हैवंविद् उद्गाता ब्रूयात् कं ते काममागायानि ” ( छां १.७.८ ) इति च दर्शनात्।

( १४ ) सहकार्यन्तरविध्यधिकरणम। सू. ४७–४९

**४७. सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्।**

“ तस्माद् ब्राह्मणः पांडित्यं निर्विद्य ( निश्चयेन लब्ध्वा ) बाल्येन तिष्ठासेत्, बाल्यं च पांडित्यं च निर्विद्याथ मुनिः, अमौनं च मौनं च निर्विद्याथ ब्राह्मणः ” ( बृ ३.५.१ ) इत्यत्र मुनिवृत्तिः ( मौनं ) विधीयते वा नेति संदेहः। “तिष्ठासेत्” इति बाल्यस्य विधिलिंगं दृश्यते। न मुनेः। बाढम्। तथापि विधिरेव मौनस्य। कुतः। सहकार्यंतरविधेः। विद्यासहकारिणः मौनस्य बाल्यपाण्डित्यवत् विधिग्रहणं युक्तम्। अपूर्वत्वात्तदित्युक्तं ‘विधिर्वा’ इत्यत्र ( २० सूत्रे )। मौनम् = मुनिभावः। मुनिश्च मननात् पाण्डित्यातिशयवत्त्वं द्योतयति। अतः अयं तृतीयः पक्षः समुत्पद्यते। विद्यायाः सहकारित्वेन सर्वेषां विधेयत्वं उपपद्यते। “विध्यादिवत्”। यथा “ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ” इत्यत्र तत्सहकारि – अग्न्याधानादिकं विधीयते तद्वत्।

मुनि also indicates the 4 th Āshrama.

**४८. कृत्स्नभावात्तु गृहिणोपसंहारः।**

ननु एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमाति विद्यमाने कथं

" अभिसमावृत्य कुटुम्बे " इति ( छां ८.१५.१ ) गृहिणोपसंहारः छान्दोग्ये क्रियते । उच्यते । गृहिणं प्रति बहूनि स्वाश्रमकर्माणि आश्रमान्तरकर्माण्युपदिष्टानि बहुलायासानि । तस्मात् कृत्स्नभावोऽस्य विशिष्यते । तस्माद्‍ गृहिणोपसंहारः युक्तः ।

**४९. मौनवदितरेषामप्युपदेशात् ॥**

मौनं गार्हस्थ्यं इति आश्रमद्वयोक्तेः किमन्ययोः आश्रमयोः प्रतिषेधः इति संदेहः । न । मौनगार्हस्थ्यवत् वानप्रस्थब्रह्मचर्याश्रमयोरपि संग्रहः । तावपि श्रुतिमन्तावेव । " तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः " इति दर्शनात् ( छां २.२३.१ ) । "इतरेषा"मिति वानप्रस्थब्रह्मचर्याश्रमयोः बहुवचनं वृत्तिभेदेनोपगन्तव्यम् ।

( १५ ) अनाविष्काराधिकरणम् । सू. ५०

**५०. अनाविष्कुर्वन्नन्वयात् ॥**

" बाल्येन तिष्ठासेत् " इत्युक्तम् । तत्र बालस्य कोर्थः । न वयोवस्थानं असंभवात् । नापि तिष्ठन्मूत्रपुरीषत्वादि । विदुषो नानुष्ठेयत्वात् । तस्मादन्तर्गता भावशुद्धिः अप्ररूढेन्द्रियत्वं दंभादिविरहितत्वं चात्र बाल्यशब्देन विवक्षितम् । तदाह । ज्ञानाध्ययनधार्मिकत्वादिभिः अनाविष्कुर्वन्नात्मानं अविख्यापयन् । दंभादिरहितो भवेदित्यर्थः अन्वयादुपपद्यते ।

( १६ ) ऐहिकाधिकरणम् । सू. ५१

**५१. ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥**

उक्तं विद्यासाधनम् । अधुना फलं प्रति ब्रूते । साधनस्य फलं विद्योत्पत्तिः । सा तु ऐहिका इह जन्मनि भवति । उपस्थितविपाकस्य कर्मांतरस्य प्रतिबंधः न चेत् । सति प्रतिबन्धे जन्मान्तरे ज्ञानोत्पत्तिः न इह जन्मनीत्यर्थः । " शृण्वन्तोऽपि बहवो यं न विद्युः " ( क २.७ ) इति दर्शनात् । " तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् । " इति स्मृतेश्च ( गी ६.४३ ) । विद्याजन्म फलं कदाचित् ऐहिकं इह जन्मन्यपि भवतीत्यर्थः ।

According to R., sūtra 51 refers to vidyās that have आभ्युदयिक fruit to be obtained in the world ( it is obtained if no obstacle exists ); and sūtra 52 refers to Mukti as fruit and states that even Mukti is governed not by a different rule.

( १७ ) मुक्तिफलाधिकरणम् । सू. ५२

**५२. एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥**

यद्यपि साधनफलं विद्योत्पत्तिरिह जन्मनि जन्मान्तरे वा भवति, तथापि उत्पन्ने ज्ञाने मोक्षप्राप्तिः तात्कालिकी एव। न तत्र जन्मान्तर-विलम्बः। ५१ सूत्रे दृष्टो नियमः अत्र न वर्तते। तथा श्रुतत्वात्। मुक्तावस्था तु सर्ववेदान्तेषु एकरूपतयैवावधार्यते। साधनफलस्य विद्योत्पत्तौ विलम्बः विद्याभेदादुचितः। न तथा मुक्तौ कश्चिद् भेदः।

" न हि गतिरधिकास्ति कस्यचित्।
सति हि गुणे प्रवदन्त्यतुल्यताम्॥ इति स्मृतेश्च ( मभा १२. १८७.५८; BORI edition )।

Summary :–

**तृतीयाद्ये** परिष्वक्तः भूतसूक्ष्मैश्च रंहति।
जीवस्तदन्तरप्राप्तौ प्राणैस्ततः निवर्तते॥ १ ॥

कृतात्ययात्तुशयवान् आकाशादिषु सत्वरम्।
साभाव्यात्त्वथ व्रीह्यादौ संश्लेषादिति दर्शितम्॥ २ ॥

तथागतिर्देवयान – पितृयाणातिरेकतः।
लोके प्रोक्ता संयमने मध्येऽनिष्टादिकारिणाम्॥ ३ ॥

**द्वितीये** संध्यसृष्टेश्च मायामात्रं तथैव च।
सूचकत्वं प्रोच्य लयः सुप्तस्य परमात्मनि॥ ४ ॥

तस्यैव बोधस्तु ततः साम्यमर्धेन मूर्च्छतः ।
न परस्योभयं लिंगं निर्विशेषं प्रधानतः ॥ ५ ॥

रूपवत्त्वे न वैयर्थ्यं प्रकाशजलसूर्यवत् ।
नेति नेति निषेधश्च नातः किंचित्परं ततः ॥ ६ ॥

ईश्वराच्च फलं सर्वं श्रुतत्वाच्चेति कीर्तितम् ।
**तृतीयस्य तृतीये** तु सर्ववेदान्तप्रत्ययम् ॥ ७ ॥

ज्ञानस्यैक्यं तथापि तु गुणानामुपसंहृतिः ।
विद्यासाम्ये स्थिते कार्या भेदश्छांदोग्यकाण्वयोः ॥ ८ ॥

उद्गीथविद्याविषये प्रकरणादिति दर्शितम् ।
वसिष्ठादिगुणानां तु प्राणज्ञानेऽवकर्षणम् ॥ ९ ॥

तथाऽऽनन्दादिगुणाः सर्वे सर्वत्र ब्रह्मणः ।
ग्राह्याः प्रियशिरस्त्वादीन् त्यक्त्वेत्युक्त्वा तु काठके ॥ १० ॥

पुरुषस्यैव वेद्यत्वं नेन्द्रियाणां ततः परम् ।
ईश्वरस्यात्मशब्दत्वं विराजो नैतरेयके ॥ ११ ॥

प्रदर्श्यापोशनस्यापि वासोज्ञानं समर्थितम् ।
समानत्वं ततोऽभेदात् अग्निशाण्डिल्यविद्ययोः ॥ १२ ॥

न चादित्याक्षिगतयोः विशेषादिति कीर्तितम् ।
न च शाण्डिल्यविद्यायां संभृतिद्युनिवेशनम् ॥ १३ ॥

भेदः पुरुषविद्यायाः वेध्यादीनामसंग्रहः ।
मंत्राणां सर्वविद्यासु हानौ तूपायनं ततः ॥ १४ ॥

सांपरायेऽनर्थवत्वं गतेः सम्यक्प्रदर्शिनः ।
अन्यत्र गतिसाम्यं तु तथा चैवाधिकारिणाम् ॥ १५ ॥

अधिकारं स्थितिर्यावत् प्रदर्श्य तदनन्तरम्।
अवरोधोऽक्षरधियां विद्यैकत्वं सुपर्णयोः ॥ १६ ॥

गुहां प्रविष्टयोश्चैव प्रोच्योषस्तकहोलयोः।
सर्वान्तरत्वादेकत्वं व्यतिहारस्तथाऽऽत्मनोः ॥ १७ ॥

उपास्योपासकदृष्टौ सत्यादीनामभिन्नता।
दहरे च तथा हार्द सत्यकामादिसंग्रहः ॥ १८ ॥

अभोजने तु लोपश्च प्राणाहुत्याः प्रदर्शितः।
तत उद्गीथविद्यायाः अनित्यत्वं तु कर्मणि ॥ १९ ॥

तथा संवर्गविद्यायां पृथक्त्वं वायुप्राणयोः।
मनश्चिदग्निविद्यायाः स्वातंत्र्यं चापि दर्शितम् ॥ २० ॥

शरीरजीवयोर्भेदः प्रत्ययानामनन्तरम्।
संग्रहोंऽगावबद्धानां ततो वैश्वानरस्य च ॥ २१ ॥

कृत्स्नस्यैव च ध्येयत्वं विज्ञानानामनेकता।
साक्षात्कारे विकल्पश्च काम्यानां तु समुच्चयः ॥ २२ ॥

यथाकामं तथागेषु चेच्छातश्चेति दर्शितम्।
चतुर्थे विद्यया पादे पुरुषार्थः स्वतंत्रतः ॥ २३ ॥

न कर्मशेषाच्च तथा ऊर्ध्वरेतःसु चाश्रमाः।
उद्गीथास्तु न स्तुत्यर्था नापि चाख्यायिकास्ततः ॥ २४ ॥

पारिप्लवार्था च ततः न चाग्नीन्धनसंग्रहः।
आवश्यको हि विदुषां सर्वापेक्षा तथापि तु ॥ २५ ॥

शमदमाद्युपेतत्वं सर्वान्नत्वं तथापदि।
विहितत्वादविदुषां प्राप्तिराश्रमकर्मणाम् ॥ २६ ॥

साधनत्वेन विदुषां तान्येवेति च दर्शितम्।
विशेषानुग्रहाज्ज्ञानं अंतरावर्तिनां स्मृतम्॥ २७॥

परिव्राजो ह्यतद्भावः बहिस्तूभयथापि च।
उद्गीथमृत्विजः कर्म मौनस्य च विधिस्तथा॥ २८॥

बाल्यशब्दाद् भावशुद्धिः:अनाविष्कृतिरेव च।
न चेत् कर्मांतरापत्तिः ज्ञानप्राप्तिरिहैव तु।
प्राप्ते ज्ञाने मुक्तिफलं ध्रुवमेवेति दर्शितम्॥ २९॥

॥ इति साधनाख्यतृतीयाध्यायस्याधिकरणानुक्रमः समाप्तः॥

॥ इति तृतीयोऽध्यायः॥

## ॥ अथ फलाख्यचतुर्थाध्यायस्य प्रथमपादः ॥

( १ ) आवृत्त्यधिकरणम् । सू. १–२

**१. आवृत्तिरसकृदुपदेशात् ।**

" आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः " ( बृ ४.५.६ ), " सोऽन्वेष्टव्यः स विजिज्ञासितव्यः " ( छां ८.७.१ ) इति असकृद्‌ध्यानस्य श्रवणात् उपासनगतमननादीनां आवृत्तिः कार्या इति सिध्यति ।

**२. लिंगाच्च ॥**

" रश्मींस्त्वं पर्यावर्तयात् " ( छां १.५.२ ) इति रश्मिपर्यावर्तनं रश्मि-बहुत्वोपासनं विदधत् सिद्धवत् उपासनाप्रत्यावृत्तिं दर्शयति । तदेव लिंगम् ।

( २ ) आत्मत्वोपासनाधिकरणम् । सू. ३

**३. आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥**

शास्त्रोक्तविशेषणः परमात्मा । स किं अहमिति ग्रहीतव्यः किंवा मत्तः अन्य इति । उच्यते । 'आत्मे'त्येव परमेश्वरः प्रतिपत्तव्यः । आत्म-बुद्ध्यैव ग्राह्यः इत्यर्थः । " अहं ब्रह्मास्मि " ( बृ १.४.१० ) इत्यादौ तथैवोपगच्छान्ति परमेश्वरम् । तथाऽऽत्मत्वेनैव वेदवाक्यानि परमेश्वरं ग्राहयन्ति च । " एष ते आत्मा सर्वांतरः " ( बृ ३.४.१ ) इत्यादौ । तस्मात् ज्ञात्रा जीवेन स्वात्मतया ब्रह्मणो ग्राह्यत्वं सिध्यति ।

( ३ ) प्रतीकाधिकरणम् । सू. ४

**४. न प्रतीके नहि सः ॥**

" मनो ब्रह्मेत्युपासीत " ( छां ३.८.११ ), " आदित्यो ब्रह्मेत्या-देशः " ( छां ३.१९.१ ) इत्येवमादिषु प्रतीकोपासनेषु " न हि सः " उपासकः आत्मत्वेन आकलयेत् । नात्मत्वबुद्धिं कुर्यादित्यर्थः ।

( ४ ) ब्रह्मदृष्ट्यधिकरणम् । सू. ५

**५. ब्रह्मदृष्टिरुत्कर्षात् ॥**

प्रतीके न आत्मदृष्टिः कार्या। तर्हि का दृष्टिः कार्येत्याह । ब्रह्मदृष्टिः आदित्यादिषु कार्या। उत्कर्षात्। एवमुत्कर्षेणादित्यादयो दृष्टाः भवन्ति। उत्कृष्टदृष्टेस्तेषु अध्यासः कार्यः।

R. considers 4 and 5 as one Adhikaraṇa.

( ५ ) आदित्यादिमत्यधिकरणम् । सू. ६

**६. आदित्यादिमतयश्चांग उपपत्तेः ॥**

" य एवासौ तपति तमुद्गीथमुपासीत " ( छां १.३.१ ) इत्यादौ किमादित्यादिषु उद्गीथदृष्टिरुतोद्गीथादौ ( अंगे ) आदित्यदृष्टिः। उच्यते। उद्गीथादिषु अंगेषु आदित्यादिमतिः कार्या। एवं हि संस्क्रियमाणेषु उद्गीथादिषु कर्मसमृद्ध्युपपत्तेः।

( ६ ) आसीनाधिकरणम् । सू. ७–१०

**७. आसीनः संभवात् ।**

उपासनेषु आसीन एव उपासीत। न तिष्ठन् शयानो वा। तथाहि आसीने उपासनायाः सम्यग्भावात्।

**८. ध्यानाच्च ।**

यश्च ध्यायतिशब्दार्थः "समानप्रत्ययप्रवाहकरणं" सः आसीनस्य अनायासेन सिध्यति।

**९. अचलत्वं चापेक्ष्य ।**

"ध्यायतीव पृथिवी" ( छां ७.६.१ ) इत्यत्र पृथिव्या अचलत्वमपेक्ष्य ध्यायतिशब्दः प्रयुज्यते। लिंगं चैतदुपासकस्य।

**१०. स्मरन्ति च ॥**

" शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः। " इति ( गी ६.११ ) आसनस्य स्मरणात्।

( ७ ) एकाग्रताधिकरणम् । सू. ११

**११. यत्रैकाग्रता तत्राविशेषात् ॥**

ननु यथाऽऽसनस्य नियमः तथा " शुचौ देशे " इति स्थाननियमः स्यात् । न । यत्रैकाग्रता सौकर्येण भवति तत्रैव यथाकामं उपासीत । न नियमः । अविशेषदर्शनात् ।

( ८ ) आप्रायणाधिकरणम् । सू. १२

**१२. आ प्रायणात्तत्रापि हि दृष्टम् ॥**

अभ्युदयफलान्युपासनानि आ प्रायणात् आमरणं कार्याणि, आमरणं तेषां आवृत्तिः कार्या इति प्रथमसूत्रस्य परिशेषोऽयम् । कुतः । अंतकाले यो भावः तस्यैव जन्मान्तरकर्मारम्भकत्वात् । तथा " ... सविज्ञानमेवान्ववक्रामति " ( बृ ४.४.२ ) " यच्चित्तस्तेनैष प्राणमायाति, प्राणः ... यथासंकल्पितं लोकं नयति " ( प्र ३.१० ) इत्यादिश्रुतेः । स्मृतिश्च " यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । " इति ( गी ८.६ ) [ गतः तृतीयाध्यायशेषः ]

( ९ ) तदधिगमाधिकरणम् । सू. १३

**१३. तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥**

तदधिगमे = ब्रह्माधिगमे, ब्रह्मप्राप्तौ उत्तरपूर्वयोः अघयोः = पापयोः अश्लेषविनाशौ भवतः । उत्तरस्य अश्लेषः, पूर्वस्य विनाशः । " यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते " ( छां ४.१४.३ ) । " क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे " । ( मुं २.२.८ ) इति दर्शनात् ।

( १० ) इतरासंश्लेषाधिकरणम् । सू. १४

**१४. इतरस्याप्येवमसंश्लेषः पाते तु ॥**

इतरस्य = पुण्यस्य अपि एवं अश्लेषः । विनाशश्चेत्यर्थात् भवति

पाते = देहपाते तु मुक्तिः । न केवलं पापस्य अपि तु पुण्यस्यापि असंश्लेष सुकृतदुष्कृतयोः हानश्रवणात् ।

R. considers that पुण्य is असंश्लिष्ट only at death ( पाते तु ). Better.

११. अनारब्धाधिकरणम् । सू. १५

**१५. अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥**

पापपुण्ययोः असंश्लेषविनाशावुक्तौ । तत्र संदेहः । किं सर्वेषां पापपुण्यकर्मणां क्षयः उत केषांचिदेव । उच्यते । ये पापपुण्यकर्मणी अनारब्धकार्ये = अप्रवृत्तफले तथा पूर्वे = जन्मांतरसंचिते इह जन्मनि च प्राग् ज्ञानोत्पत्तेः संचिते तयोरेव असंश्लेषविनाशौ । कुतः । " तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इति " ( छां ६.१४.२ ) इति शरीरपातावधिकरणात् मृते क्षेमप्राप्तिः । तस्मान्न आरब्धप्रवृत्तीनां कर्मणां क्षयः विना भोगादिति सिद्धान्तः ।

( १२ ) अग्निहोत्राद्यधिकरणम् । सू. १६–१७

**१६. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ।**

अग्निहोत्रादि कर्म तस्य = ज्ञानस्य यत्कार्यं तदेव करोति । सहकार्य( रि ? )त्वात् न तस्य क्षयः इत्यर्थः । " तमेतं वेदानुवचनेन ब्राह्मणाः विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इति ( बृ ४.४.२२ ) दर्शनात् ।

**१७. अतोऽन्यापि ह्येकेषामुभयोः ॥**

"अतः" = अग्निहोत्रादेर्नित्यात् कर्मणः "अन्याऽपि" अस्ति साधुकृत्या या फलमभिसंधाय क्रियते तस्या अपि पूर्वोक्तः ( सू १३ & १६ ) एव विनियोगः उक्तः एकेषां शाखिनाम् । " तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम् " इत्यादि ( शाट्यायनिनः ?; cf. कौ १.४ " तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति, अप्रिया दुष्कृतम् " ) । उभयोः जैमिनिबादरायणयोः अत्र संमतिः ।

( See ब्रसू 3.3.26 ‘ हानौ तु ’ etc. ).

१३. विद्याज्ञानसाधनाधिकरणम् । सू. १८

**१८. यदेव विद्ययेति हि ॥**

ननु विद्यासंयुक्तमग्निहोत्रादि कर्म ब्रह्मविद्यायाः सहकारि भवतीत्युक्तं १६ सूत्रे। तत्र संदेहः। किं विद्याविहीनं नैवंविधं इति।

“बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि” “दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय” इति स्मरणाच्च ( गी २.३९;२.४२ )। उच्यते। न। “यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति।” ( छां १ १ १० ) इति तरप्प्रत्ययश्रवणात् विद्याहीनं कर्मापि कार्यं भवति। विद्योपेतं तु ज्यायः। परं विद्याहीनं न अकार्यं अग्राह्यं वा भवति इति सिद्धान्तः।

( १४ ) इतरक्षपणाधिकरणम् । सू. १९

**१९. भोगेन त्वितरे क्षपयित्वा संपद्यते ॥**

इतरे = आरब्धकार्ये पापपुण्ये भोगेन क्षपयित्वा ब्रह्म संपद्यते। “ तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति ” ( छां ६.१४.२ ) “ ब्रह्मैव सन् ब्रह्माप्येति ” ( बृ ४.४.६ ) इत्यादिश्रवणात्।

According to R. आरब्धकार्य may not be exhausted in this life & a number of births will have to be gone through before it is defunct.

**॥ इति चतुर्थाध्यायस्य प्रथमपादः ॥**

# ॥ अथ चतुर्थाध्यायस्य द्वितीयपादः ॥

( १ ) वागधिकरणम्। सू. १–२

**१. वाङ्मनसि दर्शनाच्छब्दाच्च।**

अथापरासु विद्यासु फलप्राप्तये देवयानं पंथानमवतरतः उत्क्रान्तिक्रम वक्ति। श्रुतिः – " अस्य सोम्य पुरुषस्य प्रयतः ( गच्छतः ) वाङ्मनसि संपद्यते मनः प्राणे प्राणः तेजसि तेजः परस्यां देवतायाम् " ( छां ६.८.६ )। अत्र न स्वरूपेणैव वाचो मनसि लयः। किंतु वृत्तिमात्रेणैव। वाग्वृत्तिः मनसि लीयते इत्यर्थः। न वाग् मनसः उत्पन्ना यतस्तस्याः मनसि लयः स्यात्। तस्माद् वाग्वृत्तेरेव लयो विवक्षितः। दृश्यते च वाग्वृत्तेः मनोवृत्तौ लोके लयः। मूकस्येव। Cf. 4.2.16 infra. Shankara interprets दर्शनात् = as seen in the world; & शब्दात् = the word वाक् may be used to denote its function.

**२. अत एव च सर्वाण्यनु ॥**

" तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः " ( प्र ३.९ ) इत्यत्र सर्वेषां इन्द्रियाणां मनसि संपत्तिः = लयः श्रूयते। सोऽपि वृत्तिद्वारेणैव ज्ञेयः। शब्दात्, दर्शनाच्च।

( २ ) मनोधिकरणम् सू. ३

**३. तन्मनः प्राण उत्तरात् ॥**

" वाङ् मनसि संपद्यते " इत उत्तरं पठ्यते छान्दोग्ये ( ६.८.६ ) " मनः प्राणे "। तत्र तन्मतः वृत्तिद्वारेणैव प्राणे प्रलीयते इति उत्तरात् ग्रन्थादवगम्यते।

( ३ ) अध्यक्षाधिकरणम्। सू. ४–६

**४. सोऽध्यक्षे तदुपगमादिभ्यः।**

ननु "प्राणस्तेजसि" इति पूर्वोक्तश्रुत्या प्राणस्य तेजसि लयो दृष्टः।

न। प्राणस्य देहेन्द्रियपंजराध्यक्षे जीवे लयः भवति। कुतः। तदुपगमादिभ्यः। " एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति " ( बृ ४.३.२८ ) " तमुत्क्रामन्तं प्राणोऽनूत्क्रामति " ( बृ ४.४.२ ) इति दर्शनात्। का तर्हि "प्राणस्तेजसि" इति श्रुत्याः गतिः। उत्तरसूत्रे वक्ष्यति।

**५. भूतेषु तच्छ्रुतेः।**

प्राणसंपृक्तः अध्यक्षः जीवः तेजःसहचरितेषु भूतेषु लीयते। भूतेषु=सूक्ष्मेषु।

**६. नैकस्मिन् दर्शयतो हि॥**

न तेजस्येव एकस्मिन् किंतु पंचसूक्ष्मभूतेषु। दर्शयतश्चैतमर्थं श्रुतिस्मृती। " पृथिवीमयः आपोमयो वायुमयः आकाशमयः तेजोमयः " ( बृ ४.४.५ )। स्मृतिः –

" अण्व्यो मात्रा विनाशिन्यः दशार्धानां ( पंचानां ) तु याः स्मृताः।
ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः॥ " ( मनु १.२७ )

( ४ ) आसृत्युपक्रमाधिकरणम्। सू. ७

**७. समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य॥**

सृतिः = सरणम् = देवयानो मार्गः। तदुपक्रमात् आ मर्यादीकृत्य समाना इयं उत्क्रान्तिः। विदुषो अविदुषश्च। आविद्वान् भूतसूक्ष्माण्यादाय देवयानं स्वकर्मानुसारेण प्रतिपद्यते। विद्वान् पुनः मूर्धन्यया नाड्या ब्रह्मलोकमिति विशेषः। तथा तत्पर्यन्ता समानैव द्वयोः उत्क्रान्तिः। अतः उच्यते। अमृतत्वं च अनुपोष्य=अदग्ध्वा इत्यर्थः। ज्ञानाग्निना अदग्धाविद्याजालस्य अवश्यमेव प्राणानां आश्रयस्थानम्। अमृतत्वं चात्र सापेक्षं ( lower ) इष्टम्। अदग्धाविद्याजालस्यैव यत् तदपेक्षितम्। न ज्ञानिनः।

R. considers that अमृतत्वम् here means merely the abandonment of desires mentioned in the preceding Pāda and quotes :

" यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः (श्रिताः)। अथ

मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ॥ " (क ६.१४) (बृ ४.४.७)।"
ब्रह्मानुभवमात्रपरममृतत्वं इत्यर्थः ।

(५) संसारव्यपदेशाधिकरणम् । सू. ८–११

**८. तदाऽपीतेः संसारव्यपदेशात् ।**

" तेजः परस्यां देवतायाम् " इतिपूर्वोक्तश्रुतौ सूक्ष्मभूतपरिष्वक्तस्य जीवस्य परस्यां देवतायां लयः उक्तः । स कीदृशः इति प्रश्नः । उच्यते । तद् = तेज आदि भूतसूक्ष्मं आ अपीतेः आ संसारमोक्षात् सम्यग्ज्ञान-निमित्तात् तत्रैवावतिष्ठते ।

" योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ "

इति (क ५.७) संसारव्यपदेशात् ।

R. interprets this not as a separate Adhikaraṇa; but as a continuation of argument in sūtra 7. The अमृतत्वम् spoken in sūtra 7 is not obtained by separation of subtle elements from the soul, because samsara state is predicted of the soul.

**९. सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ।**

शरीरादुत्क्रामतः जीवस्याश्रयभूतं पांचभौतिकं शरीरं सूक्ष्मं इति स्वरूपतः प्रमाणतश्च भवितुमर्हति । अतएव च देहान्निर्गच्छन् (पार्श्वस्थैः) नोपलभ्यते ।

R. interprets this to mean that the soul spoken of in sūtra 7 is accompanied by सूक्ष्म elements.

**१०. नोपमर्देनातः ।**

अतएव = सूक्ष्मत्वात् शरीरस्योपमर्देन दाहादिना नेतरस्य सूक्ष्मस्योपमर्दः उपलभ्यते।

R. :– and therefore अमृतत्व is not effected by total destruction of the body.

**११. अस्यैव चोपपत्तेरेष ऊष्मा॥**

अस्यैव च सूक्ष्मशरीरस्य एष ऊष्मा यं एतस्मिन् शरीरे संस्पर्शेन विजानन्ति। स्थूलशरीरव्यतिरिक्तव्यपाश्रयः ऊष्मा इत्यर्थः।

( ६ ) प्रतिषेधादिकरणम्। सू. १२–१४

**१२. प्रतिषेधादिति चेन्न शारीरात्।**

ननु "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" ( बृ ४.४.६ ) इत्यत्र न प्राणा उत्क्रामन्ति इति प्रतिषेधात् प्राणानां उत्क्रमणं देहान्नैव भवति इति चेत्। न। यतः शारीरात् आत्मनः प्राणानां न उत्क्रान्तिरिति अस्याः श्रुतेरर्थो भवितुमर्हति। न पुनः देहात् प्राणानां नोत्क्रान्तिरिति।

**१३. स्पष्टो ह्येकेषाम्।**

तथा च एकेषां माध्यंदिनीयानां शाखायां "तस्य प्राणाः" इत्यत्र "न तस्मात् प्राणा उत्क्रामन्ति" इति स्पष्टं पठ्यते। 'तस्मात्' इत्यस्य 'शारीरात्' इत्येव स्पष्टः अर्थः। तथा हि आर्तभागप्रश्ने "यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो नेति" प्रश्नस्य "नेति होवाच याज्ञवल्क्यः" ( बृ ३.२.११ ) ( इति उत्तरम्। )

**१४. स्मर्यते च॥**

महाभारते "सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः।
देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः॥"

( १२.२७०.१२ BORI १२.२६१.२१; v.l. सर्व for सम्यक्; देवापि for देवा अपि )

इति ब्रह्मविदः गत्युत्क्रान्त्योरभावः।

( ७ ) वागादिलयाधिकरणम्। सू. १५

**१५. तानि परे तथाह्याह ॥**

तानि प्राणशब्दोदितानि इन्द्रियाणि भूतानि च परब्रह्मविदः परे ब्रह्मणि लीयन्ते। " एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छान्ति " ( प्र ६.५ ) ( मुण्डके तु पंचदश कलाः उक्ताः तासां लयः पृथिव्यादिभूतेषु उक्तः। तत् स्थूलदेहपरं बोध्यम् )

R. thinks that the विद्वान् is merged in पर after crossing the river विजरा where he leaves behind his subtle body. [ This is not found in श्रीभाष्य of R. The विजरा नदी is referred to in कौ २ ]

( ८ ) अविभागाधिकरणम्। सू. १६

**१६. अविभागो वचनात् ॥**

याः कलाः परे ब्रह्मणि लियन्ते ताः निरवशेषं ( अविभागेन ) तत्र लीयन्ते। तथा अनन्तरमेव " भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति " ( प्र ६.५ ) cf. sūtra 4.4.4 अविभागेन दृष्टत्वात्

( ९ ) तदोकोऽधिकरणम्। सू. १७

**१७. तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥**

७ सूत्रोक्तोत्क्रमणानंतरं जीवस्य गतिं दर्शयति। तस्य उपसंहृतवागादिकलापस्य जीवस्य ओकः आयतनं हृदयम्। " स एताः तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ( बृ ४.४.१ ) इति श्रवणात्। तस्य हृदयस्याग्रज्वलनपूर्विका देहाज्जीवस्य उत्क्रान्तिः श्रूयते। " तस्य हैतस्य हृदयस्याग्रं प्रद्योतते। तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो

वान्येभ्यो वा शरीरदेशेभ्यः " इति ( बृ ४.४.२ )। अत्रेदं बोध्यं, विद्वान् मूर्धस्थानादेव उत्क्रामति; अविद्वान् इतरेभ्यः। कुतः। विद्यासामर्थ्यात्। तच्छेषगत्यनुस्मृतियोगाच्च। विद्याशेषभूता = विद्याविशेषेषु विहिता अभ्यस्ता च मूर्धन्यनाडीसंबद्धा, गतिः, तस्याः अनुस्मृतियोगादित्यर्थः। शताधिकया = शतादतिरिक्तया नाड्या हृदयालयेन ब्रह्मणा अनुगृहीतः तद्भावमापन्नः निष्क्रामति। तथा चोक्तम्।

" शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ "
( छां ८.६.६ )

( १० ) रश्म्यधिकरणम्। सू. १८–१९

१८. रश्म्यनुसारी।

एवं उत्क्रान्तः विद्वान् ततः रश्मिभिरूर्ध्वमाक्रामाति अमृतत्वाय; अमृतत्वं च अनुपोष्येति उक्तं प्राक्। " अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते " इति श्रुतेः ( छां ८.६.५ )

**१९. निशि नेति चेन्न संबंधस्य यावद्देहभावित्वाद्दर्शयति च ॥**

ननु निशि रश्म्यभावो विद्यते अतः निशिगतिर्नेति प्राप्ते आह। निशायामपि रश्मिभिरेवोत्क्रामति। कुतः। नाडीकिरणसंबंधः यावद्देहभावी यावद्देहं विद्यते। तस्मान्निशि अपि रश्मिभिरेवोत्क्रान्तिः। " अमुष्मादादित्यात्प्रतायन्ते ( विस्तीर्यन्ते ), ता आसु नाडीषु सृप्ताः ( गताः ) आभ्यो नाडिभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः " इति ( छां ८.६.२ )। " स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति " इति ( छां ८.६.५ ) श्रुतौ यावत्तावन्निर्देशात् रात्रौ मृतस्य सूर्योदयपर्यन्तप्रतीक्षाऽपि अनावश्यकी।

( ११ ) दक्षिणायनाधिकरणम्। सू. २०–२१

**२०. अतश्चायनेऽपि दक्षिणे।**

अतः अस्मादेव कारणात् दक्षिणायने मृतोऽपि देवयानेन पथा

गच्छति। ननु " आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् "। इत्यादि श्रुतिः ( छां ५.१०.१ ) विद्यते। सत्यं, तस्या अर्थं ( " आतिवाहिकास्त-लिंगात्" सू. ४.३.४ ) उत्तरपादे वक्ष्यति।

**२१. योगिनः प्रति स्मर्यते स्मार्तें चैते॥**

कालनियमश्च योगिन एवेति गीतासु स्मर्यते। " यत्र काले त्वना वृत्तिमावृत्तिं चैव योगिनः " ( गी ८.२३ ) इत्यनेन। देवयानपितृयाणौ श्रौतौ तत्र अग्न्याद्याः अतिवाहिन्यो देवता एव। स्मृतौ तु कालनियमः अभ्युपेतः। स च स्मार्त एवेत्यर्थः। एते योगसांख्ये स्मार्तें इति शांकर-व्याख्यानम्।

॥ इति चतुर्थाध्यायस्य द्वितीयपादः॥

# ॥ अथ चतुर्थाध्यायस्य तृतीयपादः ॥

( १ ) अर्चिराद्यधिकरणम्। सू. १

**१. अर्चिरादिना तत्प्रथितेः ॥**

शरीरादुत्क्रान्तः आर्चिरादिमार्गेण ब्रह्मलोकं गच्छति विद्वान्। अविद्वांस्तु धूमादिमार्गेण। द्वे एव सृती प्रसिद्धे। तयोरेव प्रथितत्वात्। तस्मादन्यश्रुतिविरोधः एकवाक्यतया परिहर्तव्यः। रश्मिमार्गस्तु आर्चिरादिमार्गः एवेत्यवगन्तव्यम्।

( २ ) वाय्वधिकरणम्। सू. २

**२. वायुमब्दादविशेषविशेषाभ्याम् ॥**

एकवाक्यता उच्यते। "तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्नः आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यम्" ( छां ५.१०.१ ) इति छान्दोग्ये। कौषीतक्यां पुनः "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं ... स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इति श्रूयते (कौ १.३ )। तत्र छान्दोग्ये अब्दात्=संवत्सरादूर्ध्वं वायुलोकोऽवगन्तव्यः। कुतः। कौषीतक्यां यद्यपि श्रूयते अविशेषत्वं वायुलोकस्य तथापि बृहदारण्यके "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते (द्वारं प्रयच्छति) यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति।" ( बृ ५.१०.१ ) इति वायुलोके विवरप्राप्त्यादि विशेषश्रवणात् वायुलोकात् आदित्यलोकगमनस्य च श्रूयमाणत्वात्।

( ३ ) तडिदधिकरणम् सू. ३

**३. तडितोऽधि वरुणः संबंधात् ॥**

"आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्" ( छां ५.१०.२ ) इत्युक्तम्। तथा "स वरुणलोकम्" इति कौषीतक्याम् ( कौ १.३ )।

तत्र तडितः अधि = विद्युतः उपरिष्टात् वरुणलोकः। कुतः। संबंधात्। अस्ति हि संबंधो विद्युद्वरुणयोः अबाश्रयत्वात्।

( ४ ) आतिवाहिकाधिकरणम। सू. ४–६

**४. आतिवाहिकास्तल्लिंगात्।**

ननु अर्चिरादयः मार्गचिह्नानि, भोगभूमयः। नेतारो अमानवा अधिदैवपुरुषा इति प्राप्ते आह। नेतारः = आतिवाहिकाः देहादुत्क्रान्तानां जीवानां एकस्मादन्यत् स्थलं प्रापयितारः। कुतः। तल्लिंगात्। "चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयाति" ( छां ५.१०.२ ) इति प्रसिद्धवत् गमयितुः अमानवस्य पुरुषस्य श्रवणात्। अन्यत्रापि एवमिति निर्णीयते।

**५. उभयव्यामोहात् तत्सिद्धेः।**

तथा उभयोः मार्गस्य तद्गन्तुश्च व्यामोहः अचेतनत्वं विद्यते। तस्मात् कोऽपि सचेतनः मार्गप्रदर्शको मार्गे आतिवाहकश्च अपेक्ष्यते। अर्चिरादीनां अचेतनत्वं प्रसिद्धमेव। जीवस्तु करणेन्द्रियविरहितः पिंडीभूत-इव। ततः स्वयं असहायः किमपि कर्तुमशक्तः। उभयोर्मोहात् नेतृसिद्धि-रित्यर्थः।

**६. वैद्युतेनैव ततस्तच्छ्रुतेः॥**

उभयव्यामोहादित्युक्तम् बाढम्। परं विद्युतः अन्तरं वरुणेन व्यामोह-संभवः। सत्यं, परं तत्रापि वैद्युतेनैव अमानवेन ब्रह्मलोकप्रापणमवगन्तव्यं वरुणस्य तु यथाकथंचित् साह्यकारित्वमेव। कुतः। श्रुतेः "अमानवः पुरुषः" इत्यादिपूर्वोक्तायाः।

( ५ ) कार्याधिकरणम्। सू. ७–१४

**७. कार्यं बादरिरस्य गत्युपपत्तेः।**

समाप्तः सृतिविचारः। अधुना "स एनान् ब्रह्म गमयति" ( छां ५.१०.२ ) इत्यत्र किंलक्षणं ब्रह्मेति विचार्यते। कार्यमपरं ब्रह्म गमयति

इति बादरिः। कुतः। अस्य एव कार्यब्रह्मणः गतिरुपपद्यते। कार्यत्वात् विकारत्वात् एकदेशास्थितत्वादित्यर्थः। आचार्याणां मते सिद्धान्तोऽयम्।

**८. विशेषितत्वाच्च।**

" ब्रह्मलोकान् गमयति। ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति " ( बृ ६.२.१५ ) इति ब्रह्मलोकबहुत्वश्रवणात्। बहुत्वादिविशेषितत्वं च कार्यस्यैव संभवति न परमात्मनः।

**९. सामीप्यात्तु तद्व्यपदेशः।**

कथं तर्हि 'कार्यस्य' ब्रह्मशब्देन व्यपदेशः क्रियते। उच्यते। सामीप्यात् परब्रह्मसामीप्यात्। अपरं कार्यब्रह्मापि ब्रह्मशब्देनाभिधीयते। अतो न दोषः।

**१०. कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्।**

किं तर्हि देवयानेन गन्तारः कदापि परं ब्रह्म नाप्नुवन्ति इति शंकायां आह। कार्यात्यये = कार्यब्रह्मलोकमहाप्रलये तदध्यक्षेण = हिरण्यगर्भेण सह अतः परं = परं ब्रह्म तैरधिगम्यते। इत्थं क्रममुक्तिरवाप्यते। अनावृत्त्यादिश्रुत्यभिधानात्। इति बादरिः आचार्याश्च।

**११. स्मृतेश्च।**

स्मृतिरपि भवति। यथा –

" ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ( महाप्रलये )।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥ "

( मभा १२.२३४.१३ BORI )

**१२. परं जैमिनिर्मुख्यत्वात्।**

जैमिनिराचार्यस्तु " स एनान् ब्रह्म गमयति " इत्यत्र ब्रह्मशब्देन परं ब्रह्म अभिप्रेतमिति मन्यते। कुतः। ब्रह्मशब्दस्य स एव मुख्यः अर्थः। मुख्यार्थसंभवे गौणार्थस्य असंग्राह्यत्वात्।

**१३. दर्शनाच्च।**

" तयोर्ध्वमायन्नमृतत्वमेति " ( छां ८.६.६; क ६.१६ ) इति गतिपूर्वकमेवामृतत्वप्राप्तिदर्शनात्।

**१४. न च कार्ये प्रतिपत्त्यभिसंधिः॥**

प्रतिपत्त्याभिसंधिः = प्राप्तिसंकल्पः अपि न कार्ये ब्रह्मणि वर्तते। " प्रजापतेः सभां वेश्म प्रपद्ये " ( छां ८.१४.१ ) इति छान्दोग्ये श्रुतः। " प्रजापतेः ... " इति मरणकाले यः प्रतिपत्त्याभिसंधिः स न कार्यब्रह्मविषयः भवितुमर्हति। तस्मात् परमेव ब्रह्म प्राप्नोति इति जैमिनिः। इममेव पूर्वपक्षमाशंक्य बादरिमतं सिद्धान्तत्वेन प्रथममुक्तमित्याचार्याः।

( ६ ) अप्रतीकालंबनाधिकरणम्। सू. १५–१६

**१५. अप्रतीकालंबनान् नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च।**

बादरेर्मतं सिद्धान्तत्वेन गृहीत्वाऽपि किं कार्यं ब्रह्म सर्वैरुपासकैः अविशेषेण गम्यते उत कैश्चिद्विशिष्टैरिति प्रश्नः। उच्यते। अप्रतीकालंबनैरेव कार्यं ब्रह्म गम्यते। तत्क्रतुश्चेति हेतुः। यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्यं आसीदेत् इति युक्तमेव। एके तु – बादरेः जैमिनेश्च मतं पूर्वपक्ष इति गृहीत्वा बादरायणस्य मतं सिद्धान्तत्वेन गृह्णन्ति। प्रतीकालंबनाः कार्यं ब्रह्म प्राप्नुवन्ति, अप्रतीकालंबनाः परमिति उभयथाऽपि अदोषः। यथाक्रतु फलं अवगन्तव्यम्।

According to Ramānuja, this is a part of the previous Adhikaraṇa and sūtra 15 contains the siddhānta view. कार्यपक्षे 'परं ज्योतिरुपसंपद्यते' इति श्रुतिर्विरुध्यते; परपक्षे पंचाग्निविद्यायां कार्यब्रह्मश्रवणं विरुध्यते।

( R's reading of the sūtra is उभयथा च दोषात् instead of उभयथाऽदोषात् of Shankara's text. )

१६. विशेषं च दर्शयति ॥

प्रतीकोपासनेषु पूर्वस्मात् पूर्वस्मात् फलविशेषं उत्तरस्मिन् उत्तरस्मिन्नुपासने दर्शयति श्रुतिः । यथा " यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति " ( छां ७.१.५ ) " वाग्वाव नाम्नो भूयसी " ( छां ७.२.१ ) " यावद्वाचो गतं तत्रास्य यथाकामचारो भवति " ( छां ७.२.२ ) " मनो वाव वाचो भूयः " ( छां ७.३.१ ) इत्यादिफलभेददर्शनात् ।

॥ इति चतुर्थाध्यायस्य तृतीयपादः ॥

# ॥ अथ चतुर्थाध्यायस्य चतुर्थपादः ॥

( १ ) संपद्याविर्भावाधिकरणम्। सू. १–३

**१. संपद्याविर्भावः स्वेनशब्दात्।**

" एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते " ( छां ८.१२.३ ) इति श्रुतौ 'स्वेन'शब्दश्रवणात् जीवस्य परं ज्योतिः संपद्य स्वेन रूपेण आविर्भावो भवति इति गम्यते। 'स्वेन' इति शब्दः स्वरूपवचनः न 'स्वकीय'वचनः। तेन परं ब्रह्म संपद्य तेनैव स्वेन रूपेणाविर्भावः। न आगन्तुकेन अन्येन केनचिदित्यर्थः। यथा स्वर्गलोके देवलोके वा जीवस्य आगन्तुकं रूपं विद्यते तद्वन्नेहेत्यर्थः। Cf. sūtra 1.3.19 "उत्तराचेदाविर्भूतस्वरूपस्तु"।

**२. मुक्तः प्रतिज्ञानात्।**

स एव सर्वबन्धविनिर्मुक्त इत्युच्यते। कुतः। प्रतिज्ञानात्। छान्दोग्ये हि ( जागरिते ) अन्धो भवति, ( स्वप्ने ) रोदिति, ( सुप्ते ) अपीतो भवति, एवं जीवस्य अवस्थात्रयमुक्त्वा तमेव अवस्थात्रयविहीनं व्याख्येयत्वेन प्रतिज्ञाय " अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः " ( छां ८.१२.१ ) इत्युपन्यस्य " स्वेन रूपेण आभिनिष्पद्यते स उत्तमः पुरुषः " ( छां ८.१२.३ ) इति श्रुतेः।

**३. आत्मा प्रकरणात्॥**

ननु पूर्वोक्तछान्दोग्यश्रुतौ " परं ज्योतिरुपसंपद्य " इत्युक्तम्। बाढम्। 'ज्योतिः'शब्देनात्र 'आत्मा' उच्यते। कुतः। प्रकरणात्। " य आत्माऽपहतपाप्मा " इति पूर्वानुवृत्तेः ( छां ८.७.१ )।

२. अविभागेनदृष्टत्वाधिकरणम्। सू. ४

**४. अविभागेन दृष्टत्वात्।**

" परं ब्रह्म ( ज्योतिः ) संपद्य ( उपसंपद्य ) स्वेन रूपेण आभि-

निष्पद्यते" इत्युक्तम्। तत्र किमभेदेन अथवा परस्मादात्मनः पृथक्त्वेन इति संशयः। उच्यते। "अविभागेन" = अविभक्तः एव परेणात्मनेत्यर्थः। कुतः। दृष्टेः = श्रुतेः। "तत्त्वमसि" ( छां ६ ८.७ ) "अहं ब्रह्मास्मि" ( बृ १.४.१० ) "न तु तद् द्वितीयमस्ति" ( बृ ४.३.२३ ) "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" ( क ४.१५ ) इत्यादिश्रुतिभ्यः।

According to R. अविभाग is not complete! Cf. sūtra 4.2.16 "अविभागो वचनात्"।

( ३ ) ब्राह्माधिकरणम् सू. ५–७

**५. ब्राह्मेण जैमिनिरुपन्यासादिभ्यः।**

"स्वेन रूपेण" इत्युक्तम्। तत्र स्वेन ब्राह्मेण इति जैमिनिः। उपन्यासादिभ्यः। "य आत्माऽपहतपाप्मा" "सत्यकामः सत्यसंकल्पः" ( छां ८.७.१ ) "स तत्र पर्येति जक्षत् क्रीडन् रममाणः" ( छां ८.१२.३ ) "तस्य सर्वेषु लोकेषु कामचारो भवति" ( छां ७.२५.२ ) "सर्वज्ञः" "सर्वेश्वरः" इत्यादिपूर्वोपन्यासादिभ्यः तदेव सर्वज्ञत्वादि सत्यसंकल्पादि रूपं अत्र विवक्षितं इति जैमिनिराचार्यो मन्यते।

**६. चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः।**

चैतन्यस्वरूपेणैवेति औडुलोमिः। कुतः। तदात्मकत्वात् परमात्मनः। "एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" ( बृ ४.५.१३ ) इत्यादिश्रुतिदर्शनात्।

**७. एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः॥**

एवं चैतन्यमात्रस्वरूपाभ्युपगमे व्यवहारापेक्षया पूर्वस्य उपन्यासादिभ्योऽवगतस्य सत्यकामाद्यैश्वर्यरूपस्यापि भावस्य संभवात् अविरोध इति बादरायणः।

४. संकल्पाधिकरणम्। सू. ८–९

**८. संकल्पादेव तु तच्छ्रुतेः।**

हार्दविद्यायां श्रूयते " स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति " ( छां ८.२.१ )। तत्र प्रश्नः। किं संकल्पादेव उत अन्यसाधनापेक्षया इति। उच्यते। 'संकल्पादेव'। कुतः। श्रुतेः। श्रुतौ तु 'संकल्पादेव' इति एवशब्दः दृश्यते। स च अन्यथा निष्प्रयोजनः स्यात्। सूत्रमिदं अर्चिरादिना ब्रह्मलोकं गतस्योपासकस्य संबन्धि इत्याचार्याः।

**९. अत एव चानन्याधिपतिः ॥**

अत एव च = अवन्ध्यसंकल्पत्वात् "अनन्याधिपति"र्विद्वान् भवति प्राकृतास्तु जनाः आत्मसंकल्पसिद्धौ स्वामिनं अन्यं वा आश्रयन्ते यथा राजानम्। नैवं विद्वान्।

( ५ ) अभावाधिकरणम्। सू. १०–१४

**१०. अभावं बादरिराह ह्येवम्।**

ननु 'संकल्पादेवे'त्युक्ते तस्य शरीरं विद्यते वा न वेति संशयः बादरिस्तु शरीरस्याभावं मन्यते। कुतः। एवंश्रवणात्। " मनसैतान् कामान् पश्यन् रमते " ( छां ८.१२.५ ) इति। यदि मनसा शरीरेन्द्रियैश्च विहरेत् तदा 'मनसे'ति विशेषणं न स्यात्।

**११. भावं जैमिनिर्विकल्पामननात्।**

जैमिनिस्तु शरीरस्य भावं मन्यते। कुतः। " स एकधा भवति त्रिधा भवति " ( छां ७.२६.२ ) इति अनेकधा भावविकल्पस्य आम्नानात्। नहि शरीरं विना एवंरूपः अनेकधाभावः शक्यते।

**१२. द्वादशाहवदुभयविधं बादरायणोऽतः।**

यथा द्वादशाहः सत्रं अहीनश्च भवति तथा यथासंकल्पं शरीरस्य भावः अभावो वेति बादरायणः। कुतः। 'अत' एव = उभयलिंगश्रुतिदर्शनात्।

**१३. तन्वभावे संध्यवदुपपत्तेः।**

यदा सेन्द्रियस्य शरीरस्याभावः तदा संध्ये स्थाने स्वप्ने यथा सृष्ट्युत्पत्तिस्तथा विदुषः पितृलोकादिकामावाप्तिरवगन्तव्या।

**१४. भावे जाग्रद्वत् ॥**

शरीरस्य भावे तु यथा जागरितावस्थायां सृष्टिः तद्वत् विदुषः इति बादरायणमतस्यैव समर्थनम्।

( ६ ) प्रदीपाधिकरणम्। सू. १५–१६

**१५. प्रदीपवदावेशस्तथा हि दर्शयति।**

" स एकधा भवति त्रिधा भवति " इति विकल्पाम्नानात् शरीरस्य भावं जैमिनिर्मन्यत इत्युक्तम्। तत्र प्रश्नः। किं अनेकशरीरसर्गे एकव्यतिरिक्तान्यानि शरीराणि निरात्मकानि उत सात्मकानि। आत्मनः एकत्वात् अन्यानि निरात्मकानि इति प्राप्ते आह। प्रदीपवदावेशः इति। यथा प्रदीपः एकोऽपि अनेकप्रदीपभावमापद्यते विकारयोगात् तद्वत् एकोऽपि विद्वान् ऐश्वर्ययोगात् अनेकभावमापद्य सर्वाणि शरीराण्याविशति। श्रुतेश्चायमेवाभिप्रायः। " स एकधा भवति त्रिधा भवति पंचधा सप्तधा नवधा " ( छां ७.२६.२ ) इत्याद्यनेकधात्वप्रतिपादनात्। आत्ममनसोर्भेदानुपपत्तेः एकमनोनुवर्तीनि समनस्कान्येवान्यानि शरीराणि सृजति यथा योगी। सृष्टेषु च तेषु उपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं युक्तम्। एषैव योगिनामनेकशरीरयोगप्रक्रिया।

**१६. स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥**

ननु एवं अनेकशरीरत्वेन ऐश्वर्यं उपभुञ्जानस्य मुक्तस्य कथं " तत्केन कं विजानीयात् " ( बृ ४.५.१५ ) " यत्र त्वस्य सर्वमात्मैवाभूत् " ( बृ २.४.१४ ) " एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति। न प्रेत्य संज्ञाऽस्तीति " ( बृ २.४.१२ ) " यत्र सुप्तो न कंचन कामं कामयते " ( बृ ४.३.१९ ) इत्यादिश्रुतिषु श्रुतं संज्ञानराहित्यं उपपद्यते इति प्रश्नः। एतच्च संज्ञानराहित्यं स्वाप्ययः = सुषुप्तिः अथवा संपत्तिः = कैवल्यं मोक्षः एतयोरन्यतरामवस्थामपेक्ष्य उच्यते। यत्र समुत्थानमुक्तं तद्वाक्यं सुप्तपरं, यत्र 'अस्य' इत्येव केवलनिर्देशः तद् वाक्यं मोक्षाधिकारपरं इत्यर्थः।

आविष्कृतमेतत् तत्र तत्र वाक्ये यथा "भूतेभ्यः समुत्थाये"त्यत्र 'समुत्थान'शब्दात्।

According to R. संपत्ति means death (मरण) & not release!

( ७ ) जगद्व्यापाराधिकरणम्। सू. १७–२२

**१७. जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च।**

ये च उपासकाः ब्रह्म संपद्यन्ते तेषां अनेकशरीरधारणादि ऐश्वर्यमुक्तम्। अथोच्यते। किमेतदैश्वर्यं निरंकुशं अथवा सावग्रहं मर्यादितं वा। उच्यते। जगद्व्यापारक्रियावर्जं यदीश्वरस्य ऐश्वर्यं तत् तेषाम्। किमर्थं जगद्व्यापारः वर्ज्यते। प्रकरणात् ईश्वर एव जगत्कर्ता। तथा जगत्सर्जनसमये तेषामसंनिहितत्वात्।

**१८. प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमंडलस्थोक्तेः।**

ननु "आप्नोति स्वाराज्यम्" इति (तै १.६) विदुषां प्रत्यक्ष एव स्वाराज्यप्राप्त्युपदेशः। तत् कथं जगद्व्यापारवर्जमित्युच्यते। मः आधिकारिकः यः सवितृमंडलादिषु अवस्थितः परः ईश्वरः तदायत्ता इयं स्वाराज्यप्राप्तिः न स्वातन्त्र्येण। अतो न दोषः।

**१९. विकारावर्ति च तथाहि स्थितिमाह।**

ननु एवं सति निर्विशेष ईश्वरः एकः सविशेषस्त्वपरः इति स्यात्। नैष दोषः। श्रुतिरेव विकारावर्ति रूपं परमेश्वरस्य दर्शयति।
"पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" (छां ३.१२.६; ऋ १०.९०.३ विश्वा for सर्वा)

**२०. दर्शयतश्चैवं प्रत्यक्षानुमाने।**

प्रत्यक्षानुमाने = श्रुतिस्मृती एवं अविकारि विकारि च रूपं दर्शयतः परमात्मनः। "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युत

भान्ति कुतोऽयमग्निः।" (क ५.१५; श्वे ६.१४; मुं २.२.१०) "न तद् भासयते सूर्यो न शशांको न पावकः" (गी १५.६)

**२१. भोगमात्रसाम्यलिङ्गाच्च।**

यस्माद् विदुषां भोगमात्रमेव अनादिसिद्धेश्वरेण साम्यं श्रूयते तस्मात् तत् निरंकुशमित्यनुमीयते। "स यथैतां देवतां सर्वाणि भूतानि अवन्ति एवं हैवंविदं सर्वाणि भूतानि अवन्ति" (बृ १.५.२०) इति "सः" "एवंविद्" इति भेदेन व्यपदेशात्।

**२२. अनावृत्तिः शब्दात् अनावृत्तिःशब्दात्॥**

ननु एवं सति ऐश्वर्यस्यान्तवत्त्वात् विदुषामावृत्तिः प्रसज्येत। नेति ब्रूमः। कुतः। शब्दात्। "तेषां न पुनरावृत्तिः" (बृ ६.२.१५) "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" (छां ४.१५.५) "न च पुनरावर्तते" (छां ८.१५.१) इत्यादिश्रुतिभ्यः। अन्तवत्त्वे ऐश्वर्यस्य यथानावृत्तिस्तथा वर्णितं "कार्यात्यये तदध्यक्षेण सहातः परम् ..." इति (सू ४.३.१०) भाष्ये।

Summary :–

**आद्यपादे चतुर्थस्य** आवृत्तिरसकृत् स्मृता।
प्रत्ययानां तथात्मेति ग्रहणं परमात्मनः॥ १॥
न प्रतीके त्वात्मबुद्धिः ब्रह्मदृष्टिस्तथापि च।
उद्गीथे चादित्यमतिः ध्यायेदासीन एव च॥ २॥
एकाग्रा यत्र बुद्धिः स्यात् ध्यानमामरणं तथा।
क्षयो ब्रह्माधिगमे पापयोरुभयोरपि॥ ३॥
पुण्यस्य पाते त्वश्लेषः न च प्रारब्धकर्मणाम्।
अग्निहोत्रादिनित्यत्वं; अज्ञस्य विदुषोऽथवा॥ ४॥
प्रारब्धभोगाज्ज्ञानी तु ब्रह्म संपद्यते ध्रुवम्।
**द्वितीयपादे** वाङ्मनसि मनः प्राणे तथैव च॥ ५॥

प्राणोऽध्यक्षे स भूतेषु प्रलीयत इति स्थितम्।
सूक्ष्मेषु च ततस्तेषां ज्ञानाज्ञान प्रभेदतः ॥ ६ ॥
सृतिभेदः समाख्यातः लयो ब्रह्मविदः परे।
विदुषो निःसृतिर्देहात् नाड्या मूर्धन्यया पुनः ॥ ७ ॥
तदोकोग्रज्वलनात् ततो रश्म्यादिमार्गतः।
गमनं निशि तेनैव दक्षिणे चायनेऽपि च ॥ ८ ॥
स्मार्तस्तु कालनियमः योगिनामिति दर्शितम्।
**पादे तृतीये** मार्गस्तु अर्चिरादिर्व्यवस्थितः ॥ ९ ॥
वायुमब्दाच्च वरुणं तडितोऽधि निवेश्य च।
तेषां चैवातिवाहित्वं ततः प्राप्तिस्तु ब्रह्मणः ॥ १० ॥
कार्यस्य बादरिमते परस्यैव तु जैमिनेः।
अप्रतीकावलंबानां* मन्यते बादरायणः ॥ ११ ॥
स्वाविर्भावस्तु संपद्य चैतन्यमविभागतः।
ब्राह्मे सिद्धिस्तु संकल्पात् शरीरस्य तथैव तु ॥ १२ ॥
प्रदीपवत्तथाऽऽवेशः शरीरेषु बहुष्वपि।
तथा स्वाप्ययसंपत्त्योः विना संज्ञानमिष्यते ॥ १३ ॥
जगद्व्यापारवर्जं च भोगमीश्वरप्राप्तितः।
अनावृत्तिस्तु शब्दाच्च **चतुर्थान्ते** प्रकीर्तिता ॥ १४ ॥

॥ इति फलाख्यचतुर्थाध्यायस्याधिकरणानुक्रमः समाप्तः ॥

**॥ इति चतुर्थोऽध्यायः ॥**

**॥ समाप्तं चेदं शास्त्रम् ॥**

पंच पंचाशदधिकैः शतैः सूत्रैस्तु पंचभिः।
आचार्यो व्याकरोच्छास्त्रं हेतुमद्भिर्विनिश्चितैः ॥

**॥ समाप्तम् ॥**

[* Metre requires अवलंबानाम् but the word ought to be आलंबनानाम् as in the सूत्र 15.]

# ब्रह्मसूत्रपदसूची

[ पदसूच्यामस्यां ब्रह्मसूत्रस्थितानां सर्वेषां विभक्त्यन्तानां सामासिकानां पदानां तथा च समासान्तर्भूतानाम् अविभक्त्यन्तानामपि शक्तानां पदानां अन्तर्भावः अस्ति। तत्र इदं ° चिह्नं पदस्य समासान्तर्गतत्वं द्योतयति। तदिदं ° चिह्नं यदि पदस्य पूर्वं स्यात् तर्हि तादृशचिह्नाङ्कितस्य वस्तुतः समासान्तर्गतस्य पदस्य पूर्वं कश्चित् शब्दः समासेऽस्ति इति मन्तव्यम्। तथा च यदि तदिदं ° चिह्नं पदस्यानन्तरं भवेत् तर्हि तादृशपदानन्तरं किञ्चित् पदं समासेऽस्ति इति विज्ञेयम्। एवमेव यदि पदस्य उभयतः चिह्ने ° स्यातां तर्हि उभयपार्श्वतः अपि कस्यचन शब्दस्य समस्ते पदे ज्ञेयस्थितिः।]

## अ

इ

ऐ



ओ



औ



क

## प

फ

य



र

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| प्रेत्याभि··· | प्रेत्याभि··· | ७ | ११ |
| क्षत्र | क्षत्रं | ८ | ७ |
| लाकः | लोकः | १४ | ३ |
| ब्र | बृ | १४ | ६ |
| परामशः | परामर्शः | १४ | १२ |
| सवम् | सर्वम् | १५ | १० |
| शंकराचाय | शंकराचार्य | १५ | २४ |
| ···यागादि कर्मा··· | ···यागादिकर्मा··· | १६ | ८ |
| seperate | separate | १८ | ५ |
| इात | इति | १९ | ७ |
| शरार | शरीर | २० | १२ |

| | | | |
|---|---|---|---|
| ध्रवं | ध्रुवं | २१ | ९ |
| सांख्याक्तं | सांख्योक्तं | २१ | १७ |
| ···यन्ः | ···न्यः | २१ | २१ |
| कारणत्वन | कारणत्वेन | २२ | २३ |
| Sūhra | Sūtra | २३ | १२; १५ |
| ···नखादीति | ···नखादीनि | २८ | ५ |
| तू | तु | ३० | २५ |
| अङ्गागि | अङ्गाङ्गि | ३६ | ३ |
| हता | हेतौ | ३८ | १४ |
| त्वंपदा | त्वपदार्थ | ४५ | २५ |
| तद | तदा | ५० | ११ |
| अन्यथाबुद्धि··· | अन्यथा बुद्धि··· | ५० | २३ |
| काय··· | कार्य··· | ५८ | ७ |
| नर्घृण्ये | नैर्घृण्ये | ५८ | ११ |
| his | His | ६७ | १८ |
| योगाद्व | योगाद्वा | ६७ | १९ |
| जाव | जीव | ७३ | ११ |
| मं | मुं | ७५ | १९ |
| नानाशब्दा··· | नाना शब्दा··· | ७७ | ११ |
| आत्मो | आत्मा | ८१ | १९ |
| चतरेषाम् | चेतरेषाम् | ८३ | २५ |
| गृढः | गूढः | ८८ | १८ |
| शाखासुहि | शाखासु हि | ९४ | ४ |
| तैसं ३.१.२.४ | मैसं १.९.७; ४.९.१०. ऋसं ( खिल ) ५.७ | ९६ | २१ |
| सूक्ते | सूत्रे | ९९ | १४ |
| ···श्रुतः | ···श्रुतेः | १०२ | १२ |
| परामशऽ··· | परामर्शऽ··· | १०२ | १७ |
| कमणि | कर्मणि | १०५ | ७ |

| | | | |
|---|---|---|---|
| ···कार | ···कारे | १०६ | ४ |
| साऽनुतिष्ठेत् | सोऽनुतिष्ठेत् | १०७ | २० |
| बालस्य | बाल्यस्य | ११० | १३ |
| ···र्थवत्वं | ···र्थवत्त्वं | ११२ | २१ |
| हाद | हार्दे | ११३ | ६ |
| तथागेषु | तथांगेषु | ११३ | १५ |
| असंश्लेष | असंश्लेषः | ११८ | १ |
| क्रम | क्रमं | १२० | ३ |
| तन्मतः | तन्मनः | १२० | १९ |
| चासत्युपक्रमात् | चा सत्युपक्रमात् | १२१ | १४ |
| तेज आदि | तेजआदि | १२२ | ७ |
| लियन्ते | लीयन्ते | १२४ | १४ |
| निशिगति··· | निशि गति··· | १२५ | १९ |
| ···लिंगात् | ···ल्लिगात् | १२६ | ३ |
| आर्चिरादि... | अर्चिरादि··· | १२७ | ४ |
| ···प्त्यादि विशेष... | ···प्त्यादिविशेष··· | १२७ | १८ |
| संकल्पादि | संकल्पत्वादि | १३३ | १५ |
| औडुलोभिः | औडुलोमिः | १३३ | १७ |
| दर्शा-··· | दर्श-··· | १३६ | २४ |
| विद्युता | विद्युतो | १३६ | २५ |
| तत् निरं··· | तत् न निरं··· | १३७ | ५ |
| भूताति | भूतानि | १३७ | ६ |
| ज्ञेयस्थितिः | स्थितिः ज्ञेया | १४१ | ८ |

Read अधिकाररूपशब्दान्तरेभ्यः II. iii. 19 after the 10th line on page 142; also ° इतर II. ii. 19 after the 28th line on page 150.

| | | | |
|---|---|---|---|
| छन्दाभि | छन्दोभि | १५७ | १ |
| तदवधः | तदवधेः | १५९ | १; २९ |
| तल्लिङ्ात् | तल्लिङ्गात् | १६० | २२ |